313 JUN 3 1964

# CHHANDO MANJARI

BY

PANDIT GANGA DASA

AND

# VRITTA-RATNAKARA.

BY

KEDARA BHATTA

EDITED WITH NOTES.

BY

..NDIT TARANATHA TARKAVACHASPATI
PROFESSOR OF GRAMMAR
GOVT. SANSCRIT COLLEGE

---

CALCUTTA:

VALMIKI PRESS.

.ONDON: 1870. POONA.

..NER & Co. BAJABA BALLAJEE
NENE ESQ.

Digitized by Google

14322250
OLC 9.24.11

# छन्दोमञ्जरी।

श्री गङ्गादास पण्डित विरचिता।

तथा।

# वृत्तरत्नाकरम्।

श्री केदार भट्टविरचितम्।



गवर्णमेण्टसंस्कृतविद्यालयाध्यापक श्रीतारानाथ

तर्कवाचस्पति भट्टाचार्य्यकृत विवृति

सहितम्।

तेनैव संस्कृतम्।



कलिकाता।

वाल्मीकि यन्त्रे मुद्रितम्।

संवत् १९२६।

Digitized by Google

PK
875
G3
1870

# छन्दोमञ्जरी ।



## प्रथमः स्तवकः ।

देवं प्रणम्य गोपालं वैद्यगोपालदासजः ।
सन्तोषातनयश्छन्दो गङ्गादासस्तनोत्यदः ॥
सन्ति यद्यपि भूयांसश्छन्दोग्रन्था मनीषिणाम् ।
तथापि सारमाकृष्य नवकार्थो ममोद्यमः ॥
इयमच्युतलीलाढ्या सद्वृत्ता जातिशालिनी ।
छन्दसां मञ्जरी कान्ता सभ्यकण्ठे लगिष्यति ॥
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥
आदिस्तृतीयवत् यस्य पादस्तुर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥



Digitized by Google

मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः ।
जोगुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
गुरुरेको गकारस्तु लकारो लघुरेककः ॥
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥
म ऽ ऽ ऽ, न । । ।, भ ऽ । ।, य । ऽ ऽ, ज । ऽ ।,
र ऽ । ऽ, स । । ऽ, त ऽ ऽ, । ग ऽ, ल ।, ॥
ज्ञेयाः सर्व्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥
यथा ( ऽ ऽ ) ( ।। ऽ ) ( । ऽ ) ( ऽ ।। ) ( ।।।। )
सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् ।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥

अत्र पादान्तगो लघुर्गुरुर्भवेद्वा । यथा । तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि । अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥ सुन्दरीति ग्राम्यशब्दे परे विकल्पेन लघुत्वम् । तथा भट्टिः । अथ लुलितपतत्त्रिमालं तरुणाशनवाणकेसरतमालम् । स वनं विविक्तमालं सीतां द्रष्टुं जगामालम् । अत्र प्रथमपादान्तगुरोर्लघुत्वम् । तथा मत्पितुः पारि-

Digitized by Google

जातहरणनाटके । सिन्दूरपूरस्नातगैरिकरागशोभे शश्वन्मदस्रवणनिर्झरवारिपूरे । संग्राममूमिगतमत्त-सुरेभकुम्भकूटे मदीयनखराशनयो विशन्तु । अत्र तृतीयचतुर्थपादान्तलघ्वोर्गुरुत्वम् । तथा ममाच्युत-चरितेऽपि । रक्तेन केशिदशनक्षतसम्भवेन रेजे स मण्डिततरो हरिबाहुदण्डः । तद्दन्तसन्दलितभीम-भुजप्रतापवह्नेरिव स्फुटकणप्रकरेण कीर्णः ॥ अत्र प्रथमतृतीयपादान्तस्यापि लघोर्गुरुत्वम् ।

प्रह्रेवेति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम् । ततश्च कुमारे । सा मङ्गलस्नानविशुद्धगात्री गृहीतप्र-त्युद्गमनीयवस्त्रा । निवृत्तपर्जन्यजलाभिषेका प्रफुल्ल-काशा वसुधेव रेजे ॥ अत्र प्रशब्दे परे गुरोर्लघुत्वम् । क्रान्तनाभिहृदमज्जनमाशु प्रस्थितं निवसनग्रहणाय । औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मक-राभ्याम् ॥ इति माघे । अत्र ह्रशब्दे परे गुरोर्लघुत्वम् । तीव्रप्रयत्नोच्चारणेनात्र लघुत्वमिति कण्ठाभरणः । यदुक्तं

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥
यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते ।

सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥
काचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकविभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च ।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुण्यामतुलमहिमा मां करुणया ॥
अथश्च श्लोकश्छन्दोगोविन्दे मम गुरोर्गङ्गादासस्य ।
श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम् ।
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः ॥ अतएव मुरारिः । सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूल-दोर्मण्डलीलीलालूनपुनर्विरूढशिरसो वीरस्य लिप्सोर्वरम् । याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु त्वं वृणुमित्यभितो मुखानि स दशग्रीवः कथं कथ्यतामिति ॥ जयदेवोऽपि । साध्वी माध्वीक ! चिन्ता न भवति परितः शर्करे कर्करासि द्राक्षे ! द्रक्ष्यन्ति के त्वाममृत ! मृतमसि क्षीर ! नीरं रसस्ते । माकन्द ! क्रन्द कान्ताधर ! धरणितलं गच्छ यच्छन्ति यावद्भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि ॥ एवमन्येऽपि । कत्यद्रिप्रतिरोधिताः कति नदीपाथोनिधिप्लाविताः कत्येवाटविता गताः कति न वा भूदेवदेवैर्हताः । भूम्यो भूमिपतीन्द्र ! तावक-

Digitized by Google

यत्र:प्रस्तावनामण्डली कोष्ठीकृत्य जगद्धर्मं कतिवराटीभिर्मुद्रं यास्यतीति ॥

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः ।
पादैरुक्थादिसञ्ज्ञं स्याच्छन्दः षड्विंशतिं गतम् ॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव तथातिजगती मता ॥
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृते ।
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ॥
विकृतिः संस्कृतिश्चैव तथातिकृतिरुत्कृतिः ।
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ॥

इति छन्दोमञ्जर्यां मुखबन्धाख्यः प्रथमः स्तबकः ।

---

Digitized by Google

# द्वितीयः स्तवकः ।

## अथ समवृत्तम् ।

---

### उक्था । (२)

(एकाक्षरा वृत्तिः)

१ । ग् श्री ।

श्रीस्ते सास्ताम् ।

---

### अत्युक्था । (४)

(द्व्यक्षरा वृत्तिः ।)

१ । गौ स्त्री ।

गोपस्त्रीभिः कृष्णो रेमे ।

---

### मध्या । (८)

(त्र्यक्षरा वृत्तिः)

१ । मो नारी ।

गोपानां नारीभिः । श्लिष्टोऽव्यात् कृष्णो वः ॥

---

Digitized by Google

२। रौ मृगी।

सा मृगीलोचना। राधिका श्रीपतेः॥

---

प्रतिष्ठा। (१६)

(चतुरक्षरा वृत्तिः)

१। म्गौ चेत् कन्या॥

भास्वत्कन्या सैका धन्या। यस्याः कूले कृष्णोऽखेलत्॥

२। नगिं सती॥

मुररिपो! तव पदम्। नमति सा ननु सती॥

---

सुप्रतिष्ठा। (३२)

(पञ्चाक्षरा वृत्तिः)

१। भ्गौ गिति पङ्क्तिः॥

कृष्णसनाथा तर्णकपङ्क्तिः।
यामुनकच्छे चारु चचार॥

२। सलगैः प्रिया॥

व्रजसुभ्रुवो विलसत्कलाः।
अभवन् प्रिया मुरवैरिणः॥

---

Digitized by Google

गायत्री । (६४)
(षड़क्षरा वृत्तिः)

१ । त्यौ चेत्तनुमध्या ॥

मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा ।
आस्तां मम चित्ते नित्यं तनुमध्या ॥

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः । हारीण्यबलानां हारीण्यबलानाम् । इति भट्टौ । पादान्तत्वेन ददर्श इत्यत्र गुरुत्वम् ।

२ । शशिवदना न्यौ ॥

शशिवदनानां व्रजतरुणीनाम् ।
अधरसुधोर्म्मिं मधुरिपुरैच्छत् ॥

२ । विद्या सोमराजी ॥

हरे ! सोमराजीसमा ते यशःश्रीः ।
जगन्मण्डलस्य च्छिनत्त्यन्धकारम् ॥

---

उष्णिक् । (१२८)
(सप्ताक्षरा वृत्तिः)

१ । ननगि मधुमती ॥

रविदुहितृतटे वनकुसुमततिः ।
व्यधित मधुमती मधुमथनमुदम् ॥

Digitized by Google

२ । कुमारललिता ज्सगाः ॥

मुरारितनुवल्ली कुमारललिता सा ।

अजैषानयनानां ततान मुदमुच्चैः ॥

३ । मभ्गौ स्यान्मदलेखा ॥

रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा ।

लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा ॥

---

अनुष्टुप् ॥ ( २५६ )

(अष्टाक्षरा वृत्तिः)

१ । चित्रपदा यदि भौ गौ ॥

यामुनसैकतदेशे गोपवधूजलकेलौ ।

कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥

२ । भात्तलगा माणवकम् ॥

चञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम् ।

ध्याय सखे ! स्मेरमुखं नन्दसुतं माणवकम् ॥

मो मो गो गो विद्युन्माला ॥

वासोवल्ली विद्युन्माला बर्हश्रेणी शक्रस्यापः ।

यस्मिन्नास्तां तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः ॥

Digitized by Google

४ । ग्लौ रजौ समानिका तु ॥

यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म
धीः समानिका परेण नोचितात्र मत्सरेण ॥

५ । प्रमाणिका जरौ लगौ ॥

पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः ।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥

मतल्लिका मचर्चिकेत्यमरकोषः ॥

६ । नभलगा गजगतिः ॥

रविसुतापरिसरे विहरतो दृशि हरेः ।
व्रजवधूगजगतिर्मुदमलं व्यतनुत ॥
अवतु वो गिरिसुता शशिभृतः प्रियतमा ।
वसतु मे हृदि सदा भगवतः पदयुगम् ॥

इति कस्यापि ।

——

बृहती ॥ (५१२)

(नवाक्षरा वृत्तिः)

१ । भुजगशिशुसृता नौ मः ॥

हृदतटनिकटक्षोणी भुजगशिशुभृता यासीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥

सृतेत्येवं शम्भुप्रभृतिषु पाठः सृतेत्येवमाधुनिकाः पठन्ति ।

Digitized by Google

२ । स्यान्मणिमध्यं चेद्भसभाः ॥

कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।

चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥

३ । सजरैर्भुजङ्गसङ्गता ॥

तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।

कथमेति वत्सचारकश्चपलः सदैव तां हरिः ॥

---

पङ्क्तिः । (१०२४)

(दशाक्षरा वृत्तिः)

१ । रुक्मवती सा यत्र भमस्गाः ॥

कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः ।

राज्यपदे हर्म्यालिरुदारा रुक्मवती विप्रः खलु तस्य ॥

रूपवतीयं क्वचित् क्वचित् चम्पकमाला च ॥

२ । ज्ञेया मत्ता मभसगसृष्टा ॥

पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे ।

उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे ॥

३ । त्वरितगतिश्च नजनगैः ॥

त्वरितगतिर्व्रजयुवतिस्तरणिसुता विपिनगता ।

मुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता ॥

चितिविजिति स्थितिविहतिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥

इति दण्डिनि ॥

४ । नरजगैर्भवेन्मनोरमा ॥

तरणिजातटे विहारिणी व्रजविलासिनीविलासतः ।
मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥

---

## त्रिष्टुप् । (२०४८)

(एकादशाक्षरा वृत्तिर्यथा ।)

१ । स्यादिन्द्रवज्रा यदि तौ ज गौ गः ॥

गोष्ठे गिरिं सव्यकरेण धृत्वा ।
रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ ॥
यो गोकुलं गोपकुलञ्च सुस्थं
चक्रे स नो रक्षतु चक्रपाणिः ॥

२ । उपेन्द्रवज्रा प्रथमे लघौ सा ।

उपेन्द्र ! वज्रादिमणिच्छटाभि-
र्विभूषणानां छुरितं वपुस्ते ।
स्मरामि गोपीभिरुपास्यमानं
सुरद्रुमूले मणिमण्डपस्थम् ॥

Digitized by Google

३। अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः ॥
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ॥ (१४ भेदः)

ममैवाच्युतचरिते यथा,—

काचिन्मुरारेर्वदनारविन्दं
संक्रान्तमालोक्य जले नवोढ़ा ।
व्यक्तं सलज्जा परिचुम्बितुं तत्
तदर्थमेवाम्भसि निर्म्ममज्ज ॥
मुखारविन्दैर्व्रजसुन्दरीणाम्
आमोदमत्युत्कटमुद्गिरद्भिः ।
अहारि चित्तेन समं मुरारे-
र्हेमाम्बुजेभ्योऽपि मधुव्रतौघः ॥
तोयेषु तस्याः प्रतिबिम्बितासु
व्रजाङ्गनानां नयनावलीषु ।
स्वबन्धुपङ्क्तिभ्रमतोऽतिमुग्धा
गोष्ठीं शफर्य्यो रचयाम्बभूवुः ॥

तथा ममैव गोपालशतके,—

वनेषु कृत्वा सुरभिप्रचारं
प्रकाममुग्धो मधुवासरेषु ।



Digitized by Google

गायन् कलं क्रीड़ति पद्मिनीषु
मधूनि पीत्वा मधुसूदनोऽसौ ॥

एवमनयोर्नानाविधा अप्युपजातयो बोद्धव्याः ।
तथा वंशस्थविलेन्द्रवंशयोरित्यमुदाहार्य्यम् ॥

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेशकल्पना
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ इति माघे ।

४ । न ज ज ल गैर्गदिता सुमुखी ।

तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः ।
तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥

५ । मात्तौ गौ चेच्छालिनी वेदलोकैः ॥

अङ्घ्रा हन्ति ज्ञानवृद्धिं विधत्ते
धर्म्मं दत्ते काममर्थञ्च सूते ।
मुक्तिं दत्ते सर्वदोपास्यमाना
पुंसां श्रद्धाशालिनी विष्णुभक्तिः ।

६ । वातोर्म्मीयं गदिता म्भौ त गौ गः ॥

ध्याता मूर्त्तिः क्षणमप्यच्युतस्य
श्रेणी नाम्नां गदिता हेलयापि ।

Digitized by Google

संसारेऽस्मिन् दुरितं हन्ति पुंसां
वातोर्म्मौ पोतमिवाम्भोधिमध्ये ॥

७। मो गो नौ गो भ्रमरविलसिता ॥

भ्रमरविलसितं क्वापि।
मुग्धे ! मानं परिहर न चिरात्
तारुण्यन्ते सफलयतु हरिः।
फुल्ला वल्ली भ्रमरविलसिता-
भावे शोभां कलयति किमु ताम् ॥

८। स्यादनुकूला भ त न ग गाश्चेत् ॥

वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाचीकृतरतिपूर्त्तिः।
वाञ्छितसिद्धौ प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥

९। रात्परैर्नरलगै रथोद्धता ॥

राधिका दधिविलोड़नस्थिता
कृष्णवेणुनिनदै रथोद्धता।
यामुनं तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात ॥

१०। स्वागता र न भ गैर्गुरुणा च ॥

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः।
तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः ॥

११। दोधकमिच्छति भत्रितयाद्गौ ॥

देव! सदोध कदम्बतलस्थ! श्रीधर! तावकनामपदं मे।
कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि चणमेष्यति योगम्॥

१२। स्यान्मोटनकं त ज जाश्च ल गौ ॥

रङ्गे खलु मल्लकलाकुशलस्त्वानूरमहाभटमोटनकम्।
यः केलिलवेन चकार स मे संसाररिपुं परिमोटयतु ॥

१३। श्येन्युदीरिता र जौ रलौ गुरुः ॥

यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा।
जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम्।

---

जगती। (४०९६)

(द्वादशाचरा वृत्तिः)

१। चन्द्रवर्त्म निगदन्ति र न भ सैः ॥

चन्द्रवर्त्म पिहितं घनतिमिरै
राजवर्त्म रहितं जनगमनैः।
इष्टवर्त्म तदलंकुरु सरसे!
कुञ्जवर्त्मनि! हरिस्तव कुतुकी ॥

२। वदन्ति वंशस्थविलं ज तौ जरौ ॥

विलासवंशस्थविलं मुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन्।

Digitized by Google

व्रजाङ्गनानामपि गानशालिनां(१)
जहार मानं स हरिः पुनातु नः ॥
वंशस्तनितमिति क्वापि ।

३ । तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ ॥

दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः
पीताम्बरोऽसौ जगतां तमोपहः ।
यस्मिन्ममज्जुः शलभा इव स्वयं
ते कंसचानूरमुखा मखद्विषः ॥

४ । ज सौ जसयुतौ जलोद्धतगतिः ।

यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥
सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ॥
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥ इति भारवौ ॥

५ । भुजङ्गप्रयातं चतुर्भिर्यकारैः ।

(१) नारदतुम्बरादीनाम् ।

Digitized by Google

सदारात्मजज्ञातिभृत्यो विहाय
स्वमेतं ह्रदं जीवनं लिप्समानः ।
मया क्षोभितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयातं द्रुतं सागराय ॥

६ । वद तोटकमब्धिसकारयुतम् ॥

यमुनातटमच्युत केलिकला
लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।
मुदितोऽट कलेरपनेतुमघं
यदि चेच्छसि जन्म निजं सफलम् ॥

७ । कीर्त्तितैषा चतूरेफिका स्रग्विणी ॥

इन्द्रनीलोपलीनेव या निर्मिता
शातकुम्भद्रवालङ्कृता शोभते ।
नव्यमेघच्छविः पीतवासा हरे
मूर्त्तिरास्तां जयायोरसि स्रग्विणी ॥

८ । वाणाश्वैश्छिन्ना वैश्वदेवी म मौ यौ ॥

अर्चामन्येषां त्वं विहायामराणा-
मद्वैतेनैकं विष्णुमभ्यर्च्य भक्त्या ।
तत्राशेषात्मन्यर्चिते भाविनी ते
भ्रातः सम्पन्नाराधना वैश्वदेवी ॥

Digitized by Google

९ । प्रमिताक्षरा स ज स सैः कथिता ॥

अमृतस्य शीकरमिवोद्गिरति
रदमौक्तिकांशुलहरीच्छुरिता ।
प्रमिताक्षरा मुररिपोर्भणिति
र्व्रजसुभ्रुवामधिजहार मनः ॥
प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभू-
न्न पतिष्यतः करसहस्रमपि ॥ इति माघे ॥

१० । द्रुतविलम्बितमाह न भौ भ रौ ॥

तरणिजापुलिने नववल्लवी-
परिषदा सह केलिकुतूहलात् ।
द्रुतविलम्बितचारुविहारिणं
हरिमहं हृदयेन सदा वहे ॥

११ । न न र र घटिता तु मन्दाकिनी ॥

बलिदमनविधौ बभौ सङ्गता
पदजलरुहि यस्य मन्दाकिनी
सुरनिहितसिताम्बुजस्रक्निभा
हरतु जगदघं स पीताम्बरः ॥

Digitized by Google

सहस्ररधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम् ।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ सविस्मयम् । इति भारवौ ।
अतिसुरभिरभाजि पुष्पश्रिया
मतनुतरतयेव सन्तानकः ।
तरुणपरभृतः स्वनं रागिणा-
मतनुत रतये वसन्तानकः ॥ इति माघे ॥

१२ । न य सहितौ न्यौ कुसुमविचित्रा
विपिनविहारे कुसुमविचित्रा ।
कुतुकितगोपीमहितचरित्रा ।
मुररिपुमूर्त्तिर्मुखरितवंशा
चिरमवताद्दस्तरलवतंसा ॥

१३ । इह वद तामरसं न ज जा यः ।
स्फुटसुषमामकरन्दमनोज्ञं
व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो !
हृदयतड़ागविकाशि ममास्तु ॥

१४ । भवति न जावथ मालती ज रौ ।

Digitized by Google

इह कलयाच्युत केलिकानने
मधुरससौरभसारलोलुपः ।
कुसुमकृतस्मितचारुविभ्रमा-
मलिरपि चुम्बति मालतीं मुहुः ॥

यमुना क्वापि ॥

अयि विजहीहि दृढोपगूहनं
त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्त्तते
वतरनु ! संप्रवदन्ति कुक्कुटाः ॥इति भारवौ ॥

१५ । त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥
प्रक्कामरमौलौ रत्नोपलक्लृप्ते
जातप्रतिबिम्बा शोणा मणिमाला ।
गोविन्दपदाब्जे राजी नखराणा-
मास्तां मम चित्ते ध्वान्तं शमयन्ती ॥

१६ । मो भः स्गौ चेज्जलधरमालाब्ध्यन्धैः ॥
या भक्तानां कलिदुरितोत्तप्तानां
तापच्छेदे जलधरमाला नव्या ।
भव्याकारा दिनकरपुत्रीकूले
केलीलोला हरितनुरव्यात् सा वः ॥

---

Digitized by Google

अतिजगती ॥ (८१९२)

(त्रयोदशाक्षरा वृत्तिः)

१। त्र्याशाभिर्म्नौ ज र गाः प्रहर्षिणीयम् ॥

गोपीनामधरसुधारसस्य पानै-
रुत्तुङ्गस्तनकलसोपगूहनैश्च ।
आश्चर्यैरपि रतिविभ्रमैर्मुरारेः
संसारे मतिरभवत् प्रहर्षिणीयम् ॥

२। ज भौ स जौ गिति रुचिरा चतुर्ग्रहैः ॥

पुनातु वो हरिरतिरासविभ्रमी
परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।
समीरणोल्लसितलतान्तरालगो
यथा मरुत्तरलतमालभूरुहः ॥
अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥इति भट्टौ॥

३। वेदै रन्ध्रैर्म्तौ य स गा मत्तमयूरः ॥

लीला नृत्यन्मत्तमयूरध्वनिकान्तं
नृत्यन्नीपामोदिपयोदानिलरम्यम् ।

Digitized by Google

रासक्रीड़ाहृष्टमना गोपवधूभिः
कंसध्वंसी निर्जनवृन्दावनमाप ॥
हा तातेति क्रन्दितमाकर्ण्य विषण्ण
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥

इति रघौ ॥

४ । न युगल सयुगलगैरिति चण्डी ॥

जयति दितिजरिपुताण्डवलीला
कुपितकवलकरकालियमौलौ ।
चरणकमलयुगचापलचण्डी
पदनखरुचिजितभोगमणिश्रीः ॥

५ । स ज सा ज गौ च यदि मञ्जुभाषिणी ॥

अमृतोर्मिशीतलकरेण लालयं-
स्तनुकान्तिरोचितविलोचनो हरे ! ।
नियतं कलानिधिरसीति बल्लवी
मुदमच्युते व्यधित मञ्जुभाषिणी ॥

सुनन्दिनीति शम्भौ ॥

६ । न न त त गुरुभिश्चन्द्रिकाऽश्वर्त्तुभिः ॥

Digitized by Google

शरदमृतरुचश्चन्द्रिकाक्षालिते
दिनकरतनयातीरदेशे हरिः ।
विहरति रभसाद्वल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥
इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परम्पद्मयोनिः परम् ॥
इति भारवौ ॥ उत्पलिनीति केचित् ॥

७ । स ज साः स गौ च कथितः कलहंसः ।
यमुनाविहारकुतुके कलहंसो
व्रजकामिनीकमलिनीकृतकेलिः ।
जनचित्तहारिकलकण्ठनिनादः
प्रमदं तनोतु तव नन्दतनूजः ॥
सिंहनादः क्वापि ॥

८ । स ज सा ज गौ च भवति प्रबोधिता ॥ (१)
शयिता मृषा चटुलमाननिद्रया
रतिकेलिकुञ्जनिलये विलासिनी ।

(१) मञ्जुभाषिणीप्रबोधितयोरेकलक्षणत्वात्
पृथग्वचनमुदाहरणान्तरदानं च प्रामादिकम् ।

मुरवैरिणा वदनचुम्बनादिना
स्मितमाततान सपदि प्रबोधिता ।

९ । भवति मृगेन्द्रमुखं न जौ जरौ गः ॥

गुरुभुजवीर्य्यभरं हरिं मदान्धा
युधि समुपेत्य न दानवा जिजीवुः ।
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य
क्व नु खलु बिभ्रति जीवनस्य योगम् ॥

---

शर्क्करी । (१६३८४)
(चतुर्द्दशाक्षरा वृत्तिः)

१ । मो गो गो नौ मः शरनवभिरसम्बाधा ॥

वीर्य्याग्नौ येन ज्वलति रणवशात् क्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसम्बाधा ।
धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः
साधूनां बाधां प्रशमयतु स कंसारिः ॥

२ । ज्ञेयं वसन्ततिलकं त भ जा ज गौ गः

फुल्लं वसन्ततिलकं तिलकं वनाल्या
लीलापरं पिककुलं कलमत्र रौति ।
वात्येष पुष्पसुरभिर्मलयाद्रिवातो
यातो हरिः स मथुरां विधिना हताः स्मः ॥



Digitized by Google

सिंहोद्धता क्वापि ॥

३। न न र स लघु गैः स्वरैरपराजिता ॥

यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता ।
व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुड़ध्वजः ॥

४। न न भ न ल गि ति प्रहरणकलिका ॥

व्यथयति कुसमप्रहरण ! कलिका
प्रमदवनभवा तव धनुषि तता ।
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम् ॥

५। मात्तो नो मो गौ यदि गदिता वासन्तीयम् ॥

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥

६। द्विःसप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत् ॥

मुग्धे ! यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।

Digitized by Google

तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

७ । स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ॥

सरसखगकुलालापनान्दीमुखीयं
लहरिभुजलया चारुफेनस्मितश्रीः ।
मुरहर ! कलयासक्तिमासाद्य किन्ते
प्रमुदितहृदया भानुजा नृत्यतीह ॥

अतिशर्करी । ( ३२७६८ )
(पञ्चदशाक्षरा वृत्तिः)

१ । गुरुनिधनमनुलघुरिह शशिकला ॥

मलयजतिलकसमुदितशशिकला
व्रजयुवतिलसदलिकगगमगता ।
सरसिजनयनहृदयसलिलनिधिं
व्यतनुत विततरभसपरितरलम् ॥

२ । स्रगियमपि च रसनवरचितयतिः ॥

अयि सहचरि ! रुचिरतरगुणमयी
मदिमवसतिरनपगतपरिमला ।
स्रगिव निवस विलसदनुपमरसा
सुमुखि ! मुदितदनुजदलनहृदये ॥

Digitized by Google

३। वसुमुनियति रिति मणिगुणनिकरः ॥

नरकरिपुरवतु निखिलसुरगति-

रमितमहिमभरसहजनिवसतिः ।

अनवधिमणिगुणनिकरपरिचितः

सरिदधिपतिरिव धृततनुविभवः ॥

४। न न म य य युतेयं मालिनी भोगिलोकैः ॥

मृगमदकृतचर्चा पीतकौषेयवासा

रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।

अनृजु निहितमंसे वंशमुत्क्वाणयन्ती

धृतमधुरिपुलीला मालिनी पातु राधा ॥

५। एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः ॥

पायाद्वो गोविन्दः कालिन्दीकूलक्षौणीचक्रे

रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः ।

मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीड़ाभिर्लोलो

यद्वद्देवानामीशः सर्व्वैश्याभिः खेलन्तीभिः ।

मा कान्ते पक्षस्यान्ते पर्य्याकाशे देशे स्वाप्सीः

कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत् ।

क्षुत्क्षामःप्रातःश्वेतश्वेतो राहुः क्रूरः प्राश्यात्

तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या ॥

इति कण्ठाभरणः ।

Digitized by Google

६ । विपिनतिलकं न स न रेफयुग्मैर्भवेत् ॥

विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम् ।
मलयमरुता रचितलास्यमालोकयन्
व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥

७ । तूणकं समानिकापदद्वयं विनान्तिमम् ॥

सा सुवर्णकेतकं विकाशि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम् ।
राधिका वितर्क्य माधवाद्य मासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे ! ॥

८ । म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा ॥

विच्छेदे ते मुरारे ! पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ।
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
क्लिष्टार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥

९ । चित्रा नाम च्छन्दश्चित्रञ्चेत्त्रयो मा यकारौ ।

गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्द्धचित्रा ।
कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीड़तीयं
कोऽन्यः स्वर्गो मोक्षो वास्माद्दिव्यते तन्न जाने ॥

Digitized by Google

अष्टिः । ( ६५५३६ )

( षोड़शाक्षरा वृत्तिः )

१ । चित्रसंज्ञमीरितं समानिकापदद्वयन्तु ॥

विद्रुमारुणाधरौष्ठशोभिवेणुवाद्यहृष्ट-
वल्लवीजनाङ्गसङ्गजातमुग्धकण्ठकाङ्ग ! ।
त्वां सदैव वासुदेव ! पुण्यलभ्यपाद ! देव !
वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥

२ । भ्रचिनगैः स्वराङ्कमृषभगजविलसितम् ॥

यो हरिरुच्चखान खरतरनखशिखरै-
र्दुर्ज्जयदैत्यसिंहसुविकटहृदयतटम् ।
किं न्विह चित्रमेतदखिलमपहृतवतः
कंसनिदेशदृप्यदृषभगजविलसितम् ॥

३ । गजतुरगविलसितमिति शम्भौ ॥

भात् स म त न गै रष्टच्छेदे स्यादिह चकिता ॥
दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद्भुजपरिघत्राता याता साध्वसविगमम् ।
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥

Digitized by Google

४। प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम् ॥

सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ।
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥

५। भ्मौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः ॥

विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा
म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला ।
राधात्यर्थं मदनललितान्दोलाऽलसवपुः
कंसारातेरतिरसमहो चक्रेऽतिचटुलम् ॥

६। न ज भ ज रैर्यदा भवति वाणिनी गयुक्तैः ।

स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम् ।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥

७। यमौ नः स्मौ गश्च प्रवरललितं नाम वृत्तम् ॥

भुजोत्क्षेपः शून्ये चलवलयभङ्कारयुक्तो
मुधापादन्यासः प्रकटिततुलाकोटिनादः ।
स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥

Digitized by Google

८। द्विगुणितवसुलघुभिरचलधृतिरिह
तरणिदुहितृतटरुचिरतरवसति-
रमरमुनिमुखजनविहितनुतिरिह।
मुररिपुरभिनवजलधररुचिततनु-
रचलधृतिरुदयति सुकृतिहृदि खलु॥

९। गरुडरुतं न जौ भ ज त गा यदा स्युस्तदा॥

अमरमयूरमानसमुदे पयोदध्वनि-
र्गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने।
धरणिभरावतारविधिडिण्डिमाडम्बरः
स जयति कंसरङ्गभुवि सिंहनादो हरेः।

---

अत्यष्टिः। (१३१०७२)

(सप्तदशाक्षरा वृत्तिः)

१। रसै रुद्रैश्छिन्ना य म न स भ ला गः शिखरिणी।
कराद्यस्य भ्रष्टे ननु शिखरिणीत्यश्रुतिशिशो-
र्विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः।
इति त्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रद्वो जगदवतु गोवर्द्धनधरः॥

Digitized by Google

२। ज सौ ज स य ला वसुग्रहयतिश्च पृथ्वी गुरुः ॥

दुरन्तदनुजेश्वरप्रकरदुस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्य्याशु यः।
स एष जगतां गतिर्दुरितभारमस्मादृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥

३। दिङ्मुनि वंशपत्रपतितं भ र न भ न लगैः ॥

नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द ! मौक्तिकमिवोत्तममरकतगम्।
एष च तत्रकोरनिकरःप्रपिबति मुदितो
वान्तमवेत्य चन्द्रचिरणैरमृतकणमिव ॥
सम्प्रति लब्धजन्मशनकैः कथमपि लघूनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदोधनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ॥

इति भारवौ।

वंशपत्रपतितेति केचित् ॥

४। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ॥

प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-
र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला।

एवं भिन्नावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः ॥

५। न स म र स ला गः षड्वेदैर्हयैर्हरिणी मता ॥

व्यधित स विधिर्नेत्रं नीत्वा भ्रुवं हरिणीगणा-
द्व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम् ।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षं विलोलविलोचनम् ॥

६। यदि भवतो न जौ भ ज ज ला गुरु नर्दटकम् ॥

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम् ।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्दटकेन कविः ॥

७। हयऋतुसागरैर्यतियुतं यदि कोकिलकम् ॥

लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लसितम् ।
अलिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥

८। वेदर्त्वश्वैर्म भ न म य ला गश्चेत्तदा हारिणी ॥

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम् ।

Digitized by Google

गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा मनोहारिणी ॥

६ । भाराकान्ता म भ न र स ला गुरुः श्रुतिषड्हयैः॥
भाराकान्ता मम तनुरियं गिरीन्द्रविधारणात्
कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ।
इत्याचष्टन् जयति जलदस्वनाकुलवल्लवी
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥

---

धृतिः । ( २६२१४४ )
(अष्टादशाक्षरा वृत्तिः)

१ । स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ॥
क्रीड़त्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-
र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥

गौडं पिष्टान्नं दधि सशर्करं निर्जलं मद्यमम्लम् ॥
इति वैद्यके ॥

२ । न ज भ ज रैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ॥
तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ।

मुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रज सखे! सुखाय वृन्दावनम् ॥
अहृत धनेश्वरस्य युधि यः समेतमायोधननम्
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथ वेह सम्पन्न कम् ॥

इति भट्टौ ॥

३। इह न न र चतुष्कसृष्टन्तु नाराचमाचक्षते ॥
दिनकरतनयातटीकानने चारुसञ्चारिणी
श्रवणनिकटकृष्टमेणेक्षणा कृष्ण! राधा त्वयि।
ननु विकिरति नेत्रनाराचमेषातिमर्च्छेदनं
तदिह मदनविभ्रमोद्भ्रान्तचित्तां विधत्स्व कृताम् ॥
रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥

इति रघौ

४। मन्दाक्रान्ता नपरलघुयुता कीर्त्तिता चित्रलेखा ॥
अस्मिन्नस्मिन् जगति मृगदृशां साररूपं यदासी-
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि।

नैताहृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतन्तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम् ॥
५। मः सोजः स त सा दिनेश ऋतुभिः शार्दूलललितम्॥
हत्वा कंसमृगे पराक्रमविधं शार्दूललितम्
यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः॥

---

अतिधृतिः। (५२४२८८)
(ऊनविंशत्यक्षरा वृत्तिः)

१। रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात्
कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेकाः
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः।
निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्
प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्किमन्यत्॥
उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः।
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमोल्ल
चलद्वल्लीवल्लीसकसुरभयश्चण्डि ! चञ्चन्ति वाताः॥
इति कस्यचित्।

२। भवत्यैव च्छाया तयुगगयुता स्याद्द्वादशान्ते यदा ॥
अभीष्टं जुष्टो यो वितरति लसद्दोश्शाखशाखोज्ज्वलः
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः।
न यस्याङ्घ्रिच्छायामुपगतवतां संसारतीव्रातप-
स्तनोति प्रोत्तापं जयति जगतां कंसारिकल्पद्रुमः॥

३। सूर्य्याश्वैर्यदि मः स जौ स त त गाः शार्दूल-
विक्रीड़ितम्।

गोविन्दं प्रणमोत्तमाङ्ग! रसने! तं घोषयाहर्निशं
पाणी! पूजयतं मनः! स्मर पदे! तस्यालयं गच्छतम्।
एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद्ध्रुवं
न प्रेत्ते भवतां क्षते भवमहाशार्दूलविक्रीड़तम्॥

४। म्रौ भ्रौ यो नो गुरुश्चेत् स्वरमुनिकरणैराह सुरसाम्।
कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्
कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः।
गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानैः प्रचयकृतसुखं व्यस्मरदसौ।

५। मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्॥
अस्मल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योम संस्थैर्विमुक्तम्।

Digitized by Google

मुग्धामोदैन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥

---

कृतिः । (१०४८५७६)

(विंशत्यक्षरा वृत्तिः ।)

१। ज्ञेया सप्ताश्वषड्भिर्मरभनययुतान्लौ गः सुवदना
प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षेऽप्यपुलका ।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो! राधा मम सखी ॥

२॥ स ज जा भ रौ स ल गा यदा कथिता तदा खलु
गीतिका ॥

करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।
बहुलानुरागनिवासरासमुद्भवा तव रागिणं
विदधौ हरिं खलु वल्लवीजनचारुचामरगीतिका ॥

इति महाकाव्ये ॥

३। वृत्तमीदृशन्तु नामतो रजौ रजौ रजौगुरुर्लघुश्च ॥
चित्रवृत्तिलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन ।

:॥ समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥
४ * रसाश्वाश्वैः शोभा नयुगगजठरा मेघविस्फर्जिता चेत्॥
सदा पूषन्नीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्द्धं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा ।
लसन्मुक्ता रक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा
महाशोभा मौलौ मिलदलिपटलैः कृष्ण! सा कापि वल्ली॥

---

प्रकृतिः । (२०९७१५२)
(एकविंशत्यक्षरा वृत्तिः ।)

१ । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।
व्याकोषेन्दीवराभा कनककषलत्पीतवासाः सुहासा
वर्हैश्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा ।
अंसव्यासक्तवंशीध्वनिसुखितजगद्बल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति नः स्रग्धरा
हारिहारा ॥
२ । न ज भ ज जा ज रौ यदि तदा गदिता सरसी
कवीश्वरैः ॥

---

* मेघविस्फूर्जितायां मद्वयान्तकषड्वर्णोपरि रद्वयग-
मध्ये गसौ विहाय न द्वय गुरुदाने शोभानामभवतीत्यर्थः ।

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्म्मिषु
स्फुटवदनाम्बुजासु बिससङ्गकबालमृणालवल्लिषु ।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम् ॥
तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरगलितश्रियो जलनिधेश्च तदाभवदन्तरं महत् ॥
इति माघे ॥

---

आकृतिः । ( ४१९४३०४ )

(द्वाविंशत्यक्षरा वृत्तिः) ।

१ । मौ गौ ना स्वारो गो गो वसुभुवनयतिरिति
भवति हंसी ॥

सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती
कामक्रीडाकूतस्फीतप्रमदसरसतरमलघु रसन्ती ।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
कंसाराते! पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी ॥

२। सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ॥
माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-
र्भृङ्गकुलैरुपसीतवने वनमालिनमालि! कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसम्
तं भज माधविकामृदुनर्त्तनयामुनवातकृतोपगमा ॥

---

विकृतिः। (८३८८६०८)

(त्रयोविंशत्यक्षरा वृत्तिः।)

१। न ज भ ज भा ज भौ लघुगुरू बुधैस्तु गदितेयम-
द्रितनया ॥

खरनखरश्रौर्य्यपावकशिखापतङ्गनिभमस्य यस्य दनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस! शमनस्तवेति तमवोचदद्रितनया ॥
विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम्।
शकुननिनादनादितककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजोरिपुवनम् ॥
इति भट्टौ ॥

अस्खलितमिदमन्यत्र ॥

२। मत्ताक्रीडं वस्विष्वाश्चायति मयुगगयुगमनुलघु गुरुभिः ॥

मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसा
गाने याने किञ्चित् स्पन्दत्पदमरुणनयनयुगलधररुचिजम् ।
रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयविहितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघपदपरिचयम् ॥

---

संकृतिः । ( १६७७७२१६ )

(चतुर्विंशत्यक्षरा वृत्तिः)

१। भूतमुनीनैर्यतिरिह भतनाःस्भौ भ न याश्च यदि भवति तन्वी ॥

माधव! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविमततनुदाहा ।
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनै-
र्निश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी ।

---

अतिकृतिः । ( ३३५५४४३२ )

(पञ्चविंशत्यक्षरा वृत्तिः ।)

। क्रौञ्चपदा स्यात् भो मसगाश्चेदिषुशरवसुमुनियति मनुलघुगैः ॥

Digitized by Google

क्रौञ्चपदालीचित्रिततीरा नदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी ।
फेनविलासा प्रोज्ज्वलहासा ललितलहरिभरपुल-
कितसुतनुः
पश्य हरे ! ऽसौ कस्य न चेतो हरति तरलगतिर-
हिमकिरणजा ॥

---

उत्कृतिः । ( ६७१०८८६४ )

(षड्विंशत्यक्षरा वृत्तिः ।)

१ । वस्वीशाश्वैश्छेदोपेतं म म त नयुग ल स ज ज गै-
भुंजङ्गविजृम्भितम् ॥
हेलोद्यन्नृत्यत्पादप्रकटविकटनटनभरो रणत्-
करतालक-
स्फारप्रेंखच्चूडावर्हः श्रुतितरलनवकिसलयस्तरङ्गि-
तहारस्रक् ।
वस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृत-
स्तुतिरच्युतः,
पायान्नश्छिन्दन् कालिन्दीह्रदकृतनिजवसतिदृढ-
भुजङ्गविजृम्भितम् ॥

Digitized by Google

अथ दण्डकः ।

१ । यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं

सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया ।

कमलनयन ! रक्ष रक्षेति गर्ज्जत्सुमुग्धगोपाङ्गनालिङ्गनानन्दितो

गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय नः ॥

२ । प्रतिचरणविवृद्धरेफाः स्युरर्णार्णजव्यालजीमूतलीलाकरोद्दामशंखादयः ।

जय जय जगदीश ! विष्णो ! हरे ! राम ! दामोदर ! श्रीनिवासाच्युतानन्त ! नारायण !!

त्रिदशगणगुरो ! मुरारे ! मुकुन्दासुरारे ! हृषीकेश ! पीताम्बर ! श्रीपते ! माधव ! ।

गरुडगमन ! कृष्ण ! वैकुण्ठ ! गोविन्द ! विश्वम्भरोपेन्द्र ! चक्रायुधाधोक्षज ! श्रीनिधे !!

Digitized by Google

बलिदमन ! नृसिंह ! शौरे ! भवाम्भोधिघोरार्णवात्
त्वं निमज्जन्तमभ्युद्धरोपेत्य माम् ॥

एवमर्णवादीनामप्युदाहरणानि बोध्यानि ॥

२। प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको
नद्वयादुत्तरैः सप्तभिर्य्यैः ॥

मुरहर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकी-
गर्भरत्न ! त्रिलोकैकनाथ !

प्रचितकपटसुरारिप्रजोद्दामदन्तावलस्तोमविद्रावणे
केशरीन्द्र ! ।

चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचे-
तोनिविष्टान्धकार !

प्रणतजनपरितापोग्रदावानलच्छेदमेघ ! प्रसीद प्रसीद ॥
यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधैर
शोकपुष्पमञ्जरीति ॥

मूर्द्धि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्ग-
चारुचन्द्रिका कचेषु

कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तके
शरोपकॢप्तदाम ! ।

फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्र-
मित्युपात्तवेश एष

Digitized by Google

केशवः पुनातु न सुपुष्पभूषितः समूर्त्तिमानि-
वागतो मधुर्विहर्त्तुमत्र ॥

५ । सगणाः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति
बुधाः कुसुमस्तवकम् ॥

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुच-
कुटमलगो

भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कु-
सुमस्तवकः ।

स नवीनतमालदलप्रतिमच्छवि बिभ्रदतीव विलो-
चनहारि वपु-

श्चपलारुचिरांशुकसन्निधरो हरिरस्तु मदीयहृद-
म्बुजमध्यगतः ॥

६ । यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको
मत्तमातङ्गलीलाकरः ॥

हेमगौरे वसानोऽंशुके शक्रनीलासिते वर्णिणि
स्पष्टदिव्यानुलेपाङ्कितो

तारहारांशुवन्योनभस्विन्नमालाञ्चितो भव्यभूषो-
ज्ज्वलाङ्गः समं सीरिणा ।

अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहा-
सहासोर्म्मिकौतूहलैः

कं स्मरङ्गाद्रिगः पातु नखक्रपाणिर्गतिक्रीड़या मत्तमातङ्गलीलाकरः ॥

लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको भवत्यनङ्गशेखरः ॥

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके!
विजृम्भमाणगौरदीधिती

रतिस्वहस्तनिर्म्मितः कलाकुतूहलेन चारुचम्प-कैरनङ्गशेखरः किमु।

इति प्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं समुद्गिरन् मुरारिरद्भुताम् ॥

प्रदोषकालसङ्गमोल्लसन्मना मनोज्ञकेलिकौतुकी करोतु नः कृतार्थताम् ॥

इति दण्डकप्रकरणम्।

इति छन्दोमञ्जर्य्यां समवृत्ताख्यो द्वितीयः स्तवकः।

अथार्द्धसमवृत्तम् ॥

१। विषमे यदि सौ स ल गा दले
भौ युजि भाद्गुरुका वुपचित्रम् ॥

द्विरावृत्त्या श्लोकः पूरयितव्यः ॥

मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम्।
गगनञ्चपलामिलितं यथा शारदनीरधरैरुपचित्रम्।

२। विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् *।

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।

रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ।

३। अयुजि प्रथमेन विवर्जिता ॥

द्रुतविलम्बिता हरिणप्लुता ॥

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ।

कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥

४। अयुजि न न र ला गुरुः समे

तदपरवक्त्रमिदं न जौ ज रौ ॥

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् ।

मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमा ॥

५। अयुजि नयुगरेफतो यकारो

युजि तु न जौ ज र गाश्च पुष्पिताग्रा ॥

करकिसलयशोभया विभान्ती

कुचफलभारविनम्रदेहयष्टिः ।

स्मितरुचिरविलासपुष्पिताग्रा

व्रजयुवतिव्रतति-र्हरेर्मुदेऽभूत् ॥

वैतालीयं पुष्पिताग्रान्वेच्छन्त्यपरवक्त्रकम् ।

---

* भत्रितयस्तस्य दोधकं विषमचरणयोराद्यक्षरहीनं सत् वेगवती स्यात् ।



Digitized by Google

६। अयुजोर्यदि सौ ज गौ युजोः
स भ रा ल्गौ यदि सुन्दरी तदा ॥
यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥
इति भारवौ ॥

इति छन्दोमञ्जर्य्यामर्द्धसमाख्यस्तृतीयः स्तवकः ।

---

अथ विषमवृत्तम् ।

१। प्रथमे स जौ यदि स लौ च
न स ज गुरुकाण्यनन्तरम् ।
यद्यथ भ न भ गाः स्युरथो
स ज सा ज गौ च भवतीयमुद्गता ॥

विललास गोपरमणीषु तरलिततनया प्रभोद्गता ।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ।

२। प्रथमे स जौ यदि स लौ च
न स ज गुरुकाण्यन-न्तरम् ।
यद्यथ भ न ज ल गाः स्युरथो
स ज सा ज गौ च भवतीयमुद्गता ॥

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ।

क्लान्तिरहितमभिराधयितुं
विधिवत्तपांसि विदधे धनञ्जयः ॥
इति भारवावुद्गताभेदः ।

३ । त्वयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा ।
जायते रनभगैर्ग्रथितं कथयन्ति सौरभमिदं तदीदृशम् ॥
अपिधूतफुल्लशतपत्त्रलवविस्मृतगन्धविभ्रमा ।
कस्य हन्त हरतीह हरे! मुखपद्मसौरभकला तवाद्भुता ॥

४ । नयुगसकारयुगलञ्च भवति यदि चेत् तृतीयके ।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता ।
व्रजसुन्दरीसमुदयेन
मुदितमनसा स्म पीयते ।
हिमकरगलितमिवामृतकं
ललितं मुरारिमुखचन्द्रविद्रुतम् ॥
भवत्यर्द्धं समं वक्त्रं विषमञ्च कदाचन ।
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते ॥

५ । वक्त्रं युग्भरां म गौ स्यातामब्धेयोऽनुष्टुभि ख्यातम् ॥
अत्रापि द्विरावृत्त्या श्लोकः पूरयितव्यः ॥
वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् ।
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥

Digitized by Google

। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् ॥
रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।
आसीद्गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः ॥
७ । पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् ।
लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरताकृता ॥
इतिच्छन्दोमञ्जर्य्यां विषमवृत्ताख्यश्चतुर्थः स्तवकः ॥

## अथ मात्रावृत्तम् ।

१ । लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ॥
षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ (१)

---

(१) विषमे प्रथमतृतीयादौ गणस्थाने जगणः न कार्य्यः न्ले नलघुरूपे षष्ठगणे द्वितीयलात् द्वितीयलघोः पूर्वमिति शेषः । तथा च चतुर्लघुरूपषष्ठगणाद्यलघोरुत्तरं सयतिपदनियमः । परके षष्ठापेक्षया परस्मिन् सप्तमे गणे नलघुरूपे सति मुखलात् आद्यलघोः पूर्वं षष्ठगणान्ते

Digitized by Google

कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्य्या ॥
वृन्दावने सलिलं वल्गुद्रुमकाण्डनिहिततनुयष्टिः ।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥
पथ्या विपुला चपला मुखचपला जघनचपला च ।
गीत्युपगीत्युद्गीतय आर्य्यागीतिर्नवैवार्य्याः ॥
२ । प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या ॥
जय जय जगदीश विभो ! केशव ! कंसान्त ! माधवानन्त ! ।
कुरु करुणामिति भणितिः पथ्या भवरोगदुःखानाम् ॥
३ । संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागोविपुलामिति समाख्याति ॥
पुंसां कलिकालव्यालहतानां नास्त्युपद्दतिरन्यापि ।
वीर्य्यविपुला मुखे चेत् स्याद्गोविन्दाख्यमन्त्रोक्तिः ॥
४ । दलयोर्द्वितीयतूर्य्यौ गणौ जकारौ तु यत्र चपला सा ।
द्विरावृत्त्या श्लोकः पूरयितव्यः ॥

---

इति यावत् । यतिः पदं च तस्य नियम इति प्रथमार्द्धम् ।
चरमार्द्धे पञ्चमके न्ले सति तस्मात् मुखलघोः पूर्व्वं
चतुर्थगणान्ते यतिः पदं च तस्य नियम इत्यर्थः । तस्मादिह
चरमार्द्धे षष्ठो लघुरूप एवेत्यर्थः ।

Digitized by Google

चपला न चेत् कदाचित् तृष्णां भवेद्भक्तिभावना कृष्णे ।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥

५ । आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥
नन्दसुत ! वञ्चकस्त्वं दृढं न ते प्रेम गच्छ तत्रैव ।
यत्र भवति ते रागः कापि जगादेति मुखचपला ॥

६ । प्राक्प्रतिपादितमर्द्धं प्रथमे चरमदले तु चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥
कृष्णः शृङ्गारपटुर्यौवनमदचपलः सुललिताङ्गः ।
आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥

७ । आर्य्याप्रथमार्द्धसमं यस्याः परार्द्धमीरिता गीतिः ॥
केशववंशजगीतिर्लोकमनोमृगहारिणी जयति ।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्य्या ॥

८ । आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् ॥
नतगोपसुन्दरीणां रासोल्लासे मुरारातिम् ।
अस्मारयदुपगीतिः स्वर्गकुरङ्गदृशां गीतेः ॥

९ । आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः ॥
नारायणस्य सन्ततमुद्गीतिः संस्मृतिभक्त्या ।
अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥

Digitized by Google

१०। आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृक् परार्द्ध-
मार्य्यागीतिः।

द्विरावृत्त्या श्लोकः पूरणीयः॥

हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः।
आर्य्यां गीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम्॥
चारुसमीरणविपिने हरिणकलङ्ककिरणावलीसविलासा।
आबद्धराममोहा वेलामूले विभावरी परिहीनेति भट्टौ।
इत्यार्य्या॥

अथ वैतालीयम्॥

१। षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥(१)
घुसृणेन मदेन चर्च्चितं तव यन्निन्दति राधिके! कुचम्।
मुदमातनुतेऽत्र पाकिमं तद्वैतालीयं फलं हरेः॥

---

(१) समे पादे ताः कला नो निरन्तराः स्युः केवलं लघुरूपाः गुरुरूपा वा न स्युः किन्तु लघुगुरुमिश्रा इत्यर्थः। अत्र आसु कलासु मध्ये समा द्वितीयादिकला पराश्रिता न भवति द्वितीयतृतीयकलयोरेको गुरुर्न कार्य्यः एवं चतुर्थी पञ्चम्योरित्यर्थः।

Digitized by Google

२। तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्।
द्विरावृत्त्या श्लोकः पूरयितव्यः।
आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदो विनोदम्।
कंसं यो निजघान देवो वन्दे तं जगतां स्थितिं दधानम्॥
इति वैतालीयम्॥

अथ पज्झटिका॥

१। प्रतिपदयमकितषोडशमात्रा-
नवमगुरुत्वविभूषितगात्रा।
पज्झटिकायाएष विवेकः
क्वापि न मध्यगुरुर्गण एकः॥
तरलवतंसाश्लिष्टस्कन्ध-
स्खलतरपज्झटिकाकटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दः
कालियशिरसि ननर्त्त मुकुन्दः॥
नवमगुरुत्वं व्यभिचरति च।
रणधरणीजितरजनिविहारीति॥
मात्रात्रयोदशकं यदि पूर्वं लघुकपरित्रिरामि।
पठ पुनरेकादशं दोहड़िका द्विगुणेन॥
प्राकृतभाषायां प्रचारः॥

Digitized by Google

राईदोहड़िपड़ण सुणि हासिश्रो कसणगोश्राल।
विन्दावणघणकुञ्जचलिश्रो कमल रसाल॥
इति छन्दोमय्यां मात्रावृत्ताख्यः पञ्चमः स्तवकः॥

अथ गद्यप्रकरणम्।

गद्यं पद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः।
प्रागुक्तलक्षणं पद्यं गद्यं सम्प्रति गद्यते।

१। अपादं पदसन्तानं गद्यं तत्तु त्रिधा मतम्।
वृत्तकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः॥
२। अकठोराक्षरंस्वल्पसमासंवृत्तकं मतम्।
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत्॥
३। भवेदुत्कलिकाप्रायं समासाढ्यं दृढ़ाक्षरम्।
४। वृत्तैकदेशसम्बन्धाद्वृत्तगन्धि पुनः स्मृतम्॥

वृत्तकं यथा।

सहि त्रयाणामेव जगतां गतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गीमवनिमवलोक्य करुणार्द्रहृदयस्तस्याभारमवतारयितुं रामकृष्णस्वरूपेणांशतो यदुवंशेऽवततार यस्तु प्रसङ्गेनापि स्मृतोवा गृहीतनामा पुंसां संसारपारमवलोकयति॥

उत्कलिकाप्रायं यथा॥ प्रणिपातप्रवणसप्रधाना-

Digitized by Google

शेषसुरासुरादिवृन्दसौन्दर्य्यप्रकटकिरीटकोटिनिविष्ट-स्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्रविक्रमोद्दा-मवामपदाङ्गुष्ठनखशिखरखण्डितब्रह्माण्डविवरनिः-सरच्छरदमृतकरप्रकरभासुरसुरवाहिनीप्रवाहपवि-त्रीकृतपिष्टपत्रितय ! कैटभारे ! क्रूरतरसंसारसागर-नानाप्रकारावर्त्तविवर्त्तमानविग्रहं मामनुगृहाण ॥

वृत्तगन्धि यथा ॥

जय जय जय जनार्द्दन ! सुकृतिमनस्तड़ागविक-स्वरचरणपद्मपद्मपत्रनयनपद्मिनीविनोदराजहंसा-भभास्वरयशःपटलपरिपूरितभुवनकुहरहरकमला-सनादिवृन्दारकवृन्दवन्दनीयपदारविन्दद्वन्द ! द्वन्दनि-र्मुक्त योगीन्द्रहृदयमन्दिराविष्कृतनिरञ्जनज्योतिः-स्वरूप ! नीरदरूप ! विरूप ! अनाथनाथ ! जगन्नाथ ! मामनन्तवधिभवदुःखव्याकुलं रक्ष रक्ष रक्ष ।

व्यवहारोचितं प्रायो मया च्छन्दोऽत्र कीर्त्तितम् ।
प्रस्तारादि पुनर्नोक्तं केवलं कौतुकं हि तत् ।

सर्गैः षोड़शभिः समुज्ज्वलपदैर्नव्यार्थभव्याशयै-
येनाकारि तदच्युतस्य चरितं काव्यं कविप्रीतिदम् ।
कंसारेः शतकं दिनेशशतकद्वन्द्वञ्च तस्यास्त्वसौ

गङ्गादासकवेः श्रुतौ कुतुकिनां सच्छन्दसां मञ्जरी ॥
इति छन्दोमञ्जर्य्यां गद्यप्रदो नाम षष्ठ-स्तवकः ॥

समाप्तोऽयं ग्रन्थः ॥

---

Digitized by Google

# वृत्तरत्नाकरम् ।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥
वेदार्थशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ कलापकम् ।
पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥
षड्ध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥
म्यरस्तजभ्नगै(१)र्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥
सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः(२)॥

---

(१) भैत्यत्र असन्देहाय न जश्भावः । एवमन्यत्रापि

(२) त्रीणि अक्षराणि परिमाणमेषां कन् । त्रिवर्णात्मकाः मादयः अष्टौ गणा इत्यर्थः । तेषां देवताफलादीन्यन्यत्रोक्तानि



Digitized by Google

मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाश,-मनिलो देशाटनं सोऽन्त्यगः।
तो व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यजो,
भश्चन्द्रो यश उज्ज्वलं मुखगुरु,-र्नोनाक आयुस्त्रिलः॥
एषां मित्रादिसंज्ञाप्यभिहिता शास्त्रकारैः
मनौ मित्रे भयौ भृत्यावुदासीनौ जरौ स्मृतौ।
तसावरी नीचसंज्ञौ द्वावेतौ मनीषिभिः॥
एतेषामाद्यद्वितीययोः सन्निवेशे फलमुक्तमाकरे
मित्रान्मित्रं विधत्ते प्रचुरधन,मथो मित्रतोभृत्यसंज्ञः
स्थैर्यं, मित्रादुदासो न किमपि च फलं, मित्रतः शत्रुसंज्ञः।
बन्धोः पीड़ा,-मथो स्याद् यदि खलु नियतं भृत्यतो मित्रसंज्ञः
सर्वं कार्य्यञ्च, भृत्यात् भृतगण इह चेदायतिं सर्वलोके॥
भृत्याच्चेत् स्यादुदासो धनविगम,-मथो भृत्यतः शत्रुसंज्ञः
शोकं कुर्य्यादुदासात् यदि भवति तदा मित्रसंज्ञोऽल्पकार्य्यम्,।
तस्माद्भृत्यः प्रभुत्वं, तत इह सततं स्यादुदासो विनाशम्,
तस्माच्छत्रुः स्ववैरं विविधसुखहरं सर्वसत्कारनाशम्॥
शत्रोर्मित्रञ्च शून्यं, यदि भवति, ततो भृत्यसंज्ञो ऽरिपक्षा
नाशं, तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम्।
शत्रोः शत्रुर्भवेच्चेदिह खलु नितरां नायकस्यैव नाशं,
देशोद्वासं, विधत्ते, कथयति च फलं पिङ्गलो नागराजः॥

Digitized by Google

गद्यप्रसङ्गादक्षरशुद्धिरप्यभिधीयते "अक्षरे परिशुद्धे तु
नायको भूतिमृच्छति" इत्युक्तेरक्षरशुद्धेरावश्यकत्वात् ।

अवर्णात् सम्पत्तिर्भवति, च मुदिवर्णाद्धनघ्नता ;
न्युवर्णादख्यातिः, सरभसमृवर्णात् वरहितात् ।
तथा ह्येचः सौख्यं, ङञणरहितादक्षरगणात्
पदादौ विन्यासात् भरवहलपूर्वैर्विरहितात् ॥

भरवहलास्तत्पूर्वाणि यान्यक्षराणि तैर्विरहितादित्यर्थः ।

हल्वर्णानां फलान्युक्तान्याकरे ॥

कः खो गो घश्च लक्ष्मीं वितरति, वियशोङ, स्तथा च, सुखं, छः
प्रीतिं, जो मित्रलाभं, भयमरणकरौ झञौ, टठौ खेददुःखे, ।
डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तस्तु खं, थस्तु युद्धं,
दो, धः, सौख्यं, मुदं, नः, सुखभयमरणक्लेशदुःखं पवर्गः ।
यो लक्ष्मीं, रस्तु दाहं, व्यसनमथ लवौ शः सुखं, षस्तु खेदं,
सः सौख्यं, हस्तु खेदं, विलयमपि च लः, क्षः समृद्धिं करोति ।
संयुक्तं चेह न स्यात् सुखभरणपटुर्वर्णविन्यासयोगः
पद्यादौ, गद्यवक्त्रे, वचसि च सकले, प्राकृतादौ समोऽयम् ॥

एतेषां फलाधारनिरूपणमप्याकरे

नायको वर्ण्यते यत्र फलं तस्य समादिशेत् ।
अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम् ।

तस्य प्रतिप्रसवोऽप्युक्तः ।

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः (१)॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः(२)॥
पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥
इदमस्योदाहरणम्—

---

देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः ।
मित्रामित्रविचारो वा न तत्र फलकल्पना ।
देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोपि वा ।

(१) सर्वगुरुः अन्तगुरुः मध्यगुरुः आदिगुरुः चतुर्लघुश्च चतुष्कलाः चतुर्मात्राः पञ्च गणाः आर्य्यादिषु मात्रावृत्तेषु ।

(२) युक्तः संयुक्तवर्णः परो यस्मात् सः गुरुर्भवेत् पादान्ते गद्यचतुर्थभागावसाने वा विकल्पेन लघुरिति शेषः गुरुर्भवेदित्यनुषङ्गः तु पुनरसौ ग् इत्यधिभिधीयते तद्ग्रहणकरेखायाः वक्रत्वात् सोऽपि वक्रः । अन्यः उक्तरूपा-द्भिन्नो वर्णो मात्रिकः मात्रामितकालेन उच्चार्य्यत्वात् ल् इति तद्ग्रहणकरेखायाः सरलत्वात् ऋजुरवक्र इति चोच्यते।

Digitized by Google

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ॥
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति (१)॥
अश्विभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थोऽंशो यतिर्विच्छेदसंज्ञितः ॥
युक् समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्द्धसमं वृत्तं विषमं च तथापरम् ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥
आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पृथक् छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम् ॥
तदूर्द्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्त्तिताः ।
शेषं गाथास्त्रिभिःषड्भिश्चरणैश्चोपलक्षिताः ॥

---

(१) ग्राम्येति । चतुर्थचरणादिस्थसंयुक्तवर्णात् प्रेत्वशात् पूर्वस्य रीत्यस्य लघुत्वं तेन नार्य्यायास्तृतीयचरणे द्वादश-मात्रताक्षतिः ।

उक्ता१ त्युक्ता२ तथा मध्या३ प्रतिष्ठा४न्या सुपूर्विका५।
गायत्र्यु६ष्णि७गनुष्टुप्८ च बृहती९ पङ्क्ति१०रेव च॥
त्रिष्टुप्११ च जगती१२ चैव तथातिजगती१३ मता।
शक्करी१४ सा ऽतिपूर्वा१५ स्यादष्ट्य१६त्यष्टी१७ततः स्मृते॥
धृति१८श्चातिधृति१९श्चैव कृतिः२० प्रकृति२१राकृतिः।
विकृतिः२२ सङ्कृति२४श्चैव तथातिकृति२५रुत्कृतिः॥२३॥
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम्।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम्॥
इति वृत्तरत्नाकराख्ये छन्दसि प्रथमोऽध्यायः॥
लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः।
षष्ठोऽयं नलघू वा प्रथमेऽर्द्धे नियतमार्यायाः (१)॥

---

(१) आर्यायाः प्रथमेऽर्द्धे एतत् नियतं लक्ष्म चिह्नं भवति, किं तदाह,—गोपेताः अन्ते मात्राद्वयसहिताः सप्त चतुष्कलात्मका गणाः त्रिंशन्मात्रा इत्यर्थः। इह छन्दसि विषमे प्रथमतृतीयपञ्चमसप्तमरूपे स्थाने जगणो न भवति। षष्ठो गणस्तु अयं जगणात्मकः नलघू वा चतुर्लघुरूपो वा भवेत्। तत्र यतिनियममाह, षष्ठे नले नलघुरूपे सति द्वितीयलात् द्वितीयलघोः पूर्वमिति शेषः। सयतिपदनियमः यतिसहितं पदं समाप्यमित्यर्थः। परके षष्ठापे-

Digitized by Google

षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।
पथ्येऽति (१)नाम तस्याः प्रकीर्त्तितं नागराजेन ॥
उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलाऽमिति समाख्याति ॥
उभयार्द्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः।
चपलेऽति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥
आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥

---

तथा परस्मिन् सप्तमे न्ले नलघुरूपे मुखलात आद्यलघोः पूर्वं षष्ठगणान्ते इति यावत् सयतिपदनियमः। चरमेऽर्द्धे पुनः पञ्चमके न्ले सति तस्मात् मुखलात् आद्यलघोः पूर्वं चतुर्थगणान्ते इत्यर्थः। सयतिपदनियमः इह उत्तरार्द्धे षष्ठो गणः लघुरूप एव तेन मात्रात्रयहीनाः पूर्वार्द्धलक्षणरूपाः त्रिंशन्मात्राः। एतद्भिन्नस्य नियमो नास्ति यथेच्छं गणादिसन्निवेशनं कार्य्यमित्यर्थः।

(१) यस्याः आर्य्यायाः पादः दलयोः उभयार्द्धयोः आद्येषु त्रिषु अंशकेषु गणेषु द्वादशमात्रात्मको दृश्यते, तस्याः पथ्येति नाम।

प्राक्प्रतिपादितमर्द्धं प्रथमे प्रथमेतरे तु चपलायाः।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ६॥

इत्यार्य्याप्रकरणम् ॥

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं १ गीतवान् भुजङ्गेशः॥
आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात्।
यद्युभयोरपि दलयोरुपगीतिं २ तां मुनिर्ब्रूते॥
आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः।
सोद्गीतिः ३ किल गदिता तद्वद्यत्यंशभेदसंयुक्ता॥
आर्य्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्।
इतरत्तद्वन्निखिलं यदीयमुदितेयमार्य्यागीतिः ४॥

इति गीतिप्रकरणम्।

षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समात्र पराश्रिता कला वैतालीये२ऽन्ते रलौ गुरुः(१)॥

---

(१) विषमे प्रथमे तृतीये च पादे षट् मात्राः, समे द्वितीये चतुर्थे च पादे अष्टौ मात्राः, ताश्च षट् अष्टौ वा नो निरन्तराः निरन्तरलघुरूपा निरन्तरगुरुरूपा वा न भवन्ति अत्र च षट्सु अष्टसु कलासु मध्ये सर्वत्र

Digitized by Google

पर्य्यन्ते यौं(१)तथैव शेषमौपच्छन्दसिकं२ सुधीभिरुक्तम्।
आपातलिका३ कथितेयं भाद्गुरुकावथ पूर्ववदन्यत्॥
तृतीययुग्दक्षिणान्तिका४ समस्तपादेषु द्वितीयलः(२)।
उदीच्यवृत्ति५ द्वितीयलः सक्तोऽग्रेण(३)भवेद्युग्मयोः॥
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्ति६रुदितेति युग्मयोः(४)।

---

समा कला द्वितीया चतुर्थी षष्ठी च कला पराश्रिता तृतीयाद्याश्रिता न कार्य्या, तथा च द्वितीयतृतीयकलयो-र्योगेन गुरुर्न कार्य्यः, एवं चतुर्थीपञ्चम्योः, षष्ठीसप्तम्योश्च। सर्वत्र चरणेषु अन्ते चरमे रलौ गुरुश्च।

(१) दलयोः पर्य्यन्ते षण्णाम् अष्टानां वा कलानामन्ते शेषे यौं रगण-यगणौ स्यातां चेत् शेषं तथैव प्राग्वत् तदा औपच्छन्दसिकं नाम छन्दः।

(२) समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीय-मात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं पूर्ववत्, तदा दक्षिणान्तिका नाम छन्दः।

(३) अयुग्मयोः प्रथमतृतीयपादयोर्यदि द्वितीयलः द्वितीयलघुः अग्रेण तृतीयलघुना सक्तः संयुक्तः, शेषं पूर्ववत्, तदा उदीच्यवृत्तिर्नाम छन्दः

(४) युग्मयोः द्वितीयचतुर्थयोः पादयोः पञ्चमः लघुः

Digitized by Google

यदा समावोजयुग्मकौ(१)पूर्वयोर्भवति तत्प्रवृत्तकम् ७ ॥

अस्य युग्मरचिता(२)परान्तिका ८ ।

अयुग्भवा(३)चारुहासिनी ९ ।

इति वैतालीयप्रकरणम् ।

वक्त्रं १ नाद्यान्नसौ(४)स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।

---

पूर्वस्य चतुर्थकलया युतः चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत्, तदा प्राच्यवृत्तिः नाम छन्दः ।

(१) यदा ओजयुग्मौ विषमसमपादौ पूर्वयोरुक्तयोः उदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ स्यातां, तथाच प्रथमतृतीयपादयोर्द्वितीयतृतीयमात्रयोर्योगेन गुरुश्चेत्, द्वितीयचतुर्थपादयोश्च चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत् तदा तत् प्रवृत्तकं नाम छन्दः ।

(२) अस्य प्रवृत्तकस्य युग्मपादेन द्वितीयपादलक्षणेन सकलपादेषु रचिता चेत्, अपरान्तिका नाम छन्दः ।

(३) अस्यैव अयुजा विषमपादलक्षणेन सकलपादेषु रचिता चेत्, चारुहासिनी नाम छन्दः ।

(४) आद्यादक्षरात् नसौ नगण-सगणौ न स्याताम्; अब्धेश्चतुर्थाक्षरात् यगणः स्यात्, तदतिरिक्ता वर्णाः यथेच्छं

Digitized by Google

युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं २ प्रकीर्त्तितम् (१) ॥
(२)ओजयोर्जेन वारिधेस्तदेव विपरीतादि ३ ।
चपलावक्त्र४मयुजोर्नकारश्चेत् पयोराशेः ॥
यस्यां लः (३)सप्तमो युग्मे सा युग्मविपुला ५ मता ।
(४)सैतवस्याखिलेष्वपि । भेनाब्धितो(५)भाद्विपुला ६ ।
इत्थमन्या ७ रश्चतुर्थात् (५)। नोऽम्बुधेश्चेन्नविपुला ॥

---

स्युः तदा अनुष्टुभि अष्टाक्षरपादके छन्दसि वक्त्रं नाम छन्दः ।

(१) अस्य भेदानाह,—युजोर्द्वितीयचतुर्थपादयोः सरिद्भर्तुर्वारिधेः चतुर्थाक्षरादूर्द्ध्वं जेन जगणेनोपलक्षितं चेत्, पथ्यावक्त्रं नाम छन्दः ।

(२) ओजयोर्विषमयोश्चेत् चतुर्थाक्षरात् जेनोपलक्षितं विपरीतादिविपरीतपथ्यावक्त्रं नाम छन्दः ।

(३) युग्मे द्वितीये चतुर्थे च पादे यस्याः सप्तमो वर्णः लः लघुः, सा युग्मविपुला नाम छन्दः ।

(४) अखिलेषु पादेषु सप्तमो वर्णो लघुश्चेत् सैतवस्य आचार्यस्य मते विपुला नाम छन्दः ।

(५) अब्धेश्चतुर्थाक्षरात् भेन रचिता भविपुला नाम छन्दः ।

(६) इत्थं चतुर्थाक्षरात्, परं रश्चेत् अन्या रविपुला नाम छन्दः ।

Digitized by Google

(५)तोऽब्धेस्तत्पूर्वान्या ८ भवेत् ।

इति वक्त्रप्रकरणम् ।

द्विगुणितवसुलघुरचलधृति१ रिह ।

(२)मात्रासमकं २ नवमो ल् गोऽन्त्यः ।

(३) जोल्नावथाम्बुधेर्विश्लोकः ३ ।

तद्वयुगलाद्वा(४)नवासिका ४ स्यात् ।

वाणाष्टनवसु यदि लश्चित्रा ५

(५)उपचित्रा ६ नवमे परयुक्ते ।

---

(१) अम्बुधेश्चतुर्थाक्षरात् तगणश्चेत् तत्पूर्वा, तद्विपुला नाम छन्दः ।

(२) सर्वेषां षोडशमात्रात्मकत्वात् मात्रासमत्वमेषाम् यत्र षोडशमात्राचरणे नवमो ल् लघुः अन्त्यो गः, ताभ्यां शेषेष्वनियमः, तत् मात्रासमकं नाम छन्दः ।

(३) अम्बुधेश्चतुर्थलघोरूर्द्धं जो मध्यगुरुः न्लौ नगण-लघू वा स्यातां, तथाच गुरुमध्या लघुरूपा वा चतस्रो मात्राः स्युः, स विश्लोको नाम छन्दः ।

(४) तद्युगलात् अम्बुधिद्वयात् अष्टमात्रातः इत्यर्थः । यदि जः न्लौ वा इत्यनुषङ्गः । सा नवासिका नाम छन्दः ।

(५) नवमे लघौ परेण दशमेन संयुक्ते ताभ्यामेक-स्मिन् गुरौ सति उपचित्रा नाम छन्दः ।

Digitized by Google

यदतीतकृतविविधलक्ष्मयुतै(१)
मात्रासमादिपादैः कलितम् ॥
अनियतवृत्तपरिमाणसहितम्
प्रथितं जगत्सु पादाकुलकम् ५ ॥
वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् (२) ॥
इति मात्रासमप्रकरणम् ।

---

(१) अतीतानां मात्रासमादीनां कृतानि विविधानि यानि लक्ष्माणि लक्षणानि तैर्युतैः मात्रासमादिपादैः कलितं यत् वृत्तं अनियतं वृत्तं वृत्तलक्षणं यत्र तादृशं सत् परिमाणेन षोडशमात्रामानेन सहितं जगत्सु प्रथितम् पादाकुलकं नाम ।

(२) इदानीं मात्रावर्णसंख्याज्ञाने लघुगुरुसंख्याज्ञानार्थं गुरुलघुनिश्चये वर्णसंख्याज्ञानार्थञ्चाह । वृत्तस्य लाः मात्राः तत्संख्याः वर्णैः वर्णसंख्यया विना गाः गुरवस्तत्संख्याः ज्ञेयाः अयमर्थः । यत्र वृत्तस्य मात्रावर्णयोः संख्या ज्ञाता गुरुलघुसंख्या तु न ज्ञाता तत्र मात्रासंख्यातो वर्णसंख्यामपनीय शिष्टा गुरुसंख्या भवति । एवं ज्ञातगुरुसंख्यातः वर्णसंख्यामपनीय लघुसंख्या भवति । यदि तु मा-



Digitized by Google

शिखिगुणितदशलघुरचितमप-
गतलघुयुगलमपरमिदमखिलम् (१)।
सगुरु शकलयुगलकमपि
सुपरिघटितललितपदवितति भवति शिखा१ ।
विनिमयविनिहितशकलयुगल-
कलितपदवितति विरचितगुणनिचया ।

---

मात्राणां गुरूणां च संख्या ज्ञाता वर्णस्य संख्या न ज्ञाता तज्ज्ञानायाह । वर्णा इति वृत्तस्य लाः मात्रास्तत्संख्याः गुरुभिस्तत्संख्यया विना वर्णाः वर्णसंख्याः ज्ञेयाः । लघुसंख्याज्ञाने गुरुसंख्याज्ञानायाह । गुरव इति । वृत्तस्य वर्णसंख्याः लैर्लघुभिः तत्संख्यया विना दले गुरवः तत्संख्याः भवन्ति । इति इत्थमेव गुरुलघुसंख्याज्ञाने निश्चितमव्यभिचरितं नियतं प्रमाणम् ।

मात्राप्रसङ्गात् द्विशकलान्याह

(१) शिखिभिस्त्रिभिर्गुणिता दश लघवस्तैः त्रिंशल्लघुभिरित्यर्थः । रचितम् अपगतं लघुयुगलं यस्मात् तत् अष्टाविंशतिलघुकमित्यर्थः एवं आद्यखण्डमित्येवं रूपम् अपरं द्वितीयं शकलमखिलं सम्पूर्णलघुरूपमित्यर्थः । अन्ते गुरुवर्णेन सहितं शकलयुगलं खण्डद्वयं यस्य तथाभूतं शिखा नाम छन्दः ।

श्रुतिसुखकृदियमपि जगति
जि(१)जशिर उपगतवति सति भवति खजा२॥
अष्टावर्द्धे(२)गा द्व्यभ्यस्ता यस्याः सानङ्गक्रीडेरक्ता
दलमपरमपि वसुगुणितसलिलनिधि-
लघुकविरचितपदविततिं भवति ॥
त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगलकृततनुरतिरुचिरा४ ॥

इति वृत्तरत्नाकराख्ये छन्दसि समुमात्राख्यो
द्वितीयोऽध्यायः ।

---

१ । उक्तायाम् २ ।
गु श्रीः १
२ । अत्युक्तायाम् ।४।
गौ स्त्री १ ।

---

(१) जि जशिरः उपगतवति सति खजा खञ्जा नाम छन्दः ।

(२) यस्याः अर्द्धे खण्डे द्व्यभ्यस्ता द्वाभ्यामभ्यस्ताः गुणिताः अष्टौ गा गुरवः सा अनङ्गक्रीडा नाम छन्दः ।

३ । मध्यायाम् ८

मो नारी१

रो मृगीर

---

४ । प्रतिष्ठायाम् १६

म्मौ चेत् कन्या१ ।

---

५ । सुप्रतिष्ठायाम् ३२

भ्गौ गिति पङ्क्तिः१

---

६ । गायत्र्याम् ६४ ।

त्यौ चेत्तनुमध्या१

म्शौ वदना२न्यौ ।

विद्युल्लेखा३मोमः ।

त्सौ चेत् वसुमती४ ।

---

७ । उष्णिहि । १२८

म्सौ गः स्यान्मदलेखा१ ।

Digitized by Google

भरगैर्हंसमाला२

ननगि मधुमती३ ।

कुमारललिता४ज्सुगाः ।

---

८। अनुष्टुभि २५६

भौ गिति चित्रपदा१ गः ।

मो मो गो गो विद्यु(ल्लेखा)न्माला२ ।

माणवकं ३ भात्तलगाः ।

म्रौ गौ हंसरुत४मेतत् ।

ग्लौ समानिका५गलौ च ।

प्रमाणिका६जरौ लगौ ।

वितान७माभ्यां यदन्यत्(१) ।

---

९। अथ बृहत्याम् ५१२ ।

रान्नसाविह हलमुखी१ ।

भुजगशिशुसृता(युता)२नौ मः।

भद्रिका३भवति रो नरौ ।

---

(१) नाराचिका५तरा लगौ। परिशिष्टम् ।

Digitized by Google

१० । अथ पङ्क्तौ १०२४

मसौ जगौ शुद्धविराड़िदं मतम् ।
म्नौ यगौ चेति पणवनामेदम् ।
जौ रगौ मयूरसारिणी३स्यात् ।
भ्मौ सगयुक्तौ(चम्पकमाला)रुक्मवतीयम्४ ।
ज्ञेया मत्ता५मभसगयुक्ता ।
नरजगैर्भवेन्मनोरमा६ ।
तोजौ गुरुणेयमुपस्थिता७ । (१)

---

११ । त्रिष्टुभि २०४८ ।

स्यादिन्द्रवज्रा१यदि तौ जगौ गः ।
उपेन्द्रवज्रा२जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ
पादौ(२)यदीयावुपजातय३स्ताः ।

---

(१) दीपकमाला भौ मता जगौ ।

ज्ञेया हंसी६मभनगयुता । परिशिष्टम् ।

(२) यदीयौ पादौ यथा कथञ्चित् द्वौ पादौ इन्द्र-वज्रोपेन्द्रवज्रपादलक्ष्मयुक्तौ ता उपजातयः । तथाच वक्ष्यमाणानुसारेण चतुःसंख्याप्रस्तारे षोड़शसु भेदेषु शुद्धा-

Digitized by Google

इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ।
न जजलगैर्गदिता सुमुखी४ ।
दोधक५वृत्तमिदं भभभाद्गौ ॥
शालिन्युक्ता६म्तौ तगौ गोऽब्धिलोकैः ।
वातोर्मी५यं कथिता म्भौ तगौ गः ॥
म्भौ न्लौ गः स्याद् भ्रमरविलसितम्६ ।
वाणरसैः स्याद् भतनगगैः श्रीः७ ॥
रान्नराविह रथोद्धता८ल्गौ ।
स्वागतेति९रनभाद्गुरुयुग्मम् ॥
ननसगगुरुरचिता वृत्ता१० ।
ननरलगुरुभिश्च भद्रिका११ ॥
मौक्तिकमाला१२यदि भतनाद् गौ ।
उपस्थित१३मिदं ज्सौ ताद् गकारौ ॥
उपचित्र१४मिदं सससाल्लगौ ।
कुपुरुषजनिता१५ननौ गौ ग: ॥

---

मिन्द्रवज्रामुपेन्द्रवज्रां च हित्वा चतुर्दशसु भेदेषु शिष्टेषु अर्द्धसमवृत्तभेदौ नामाख्यानकीं विपरीतपूर्वां च हित्वा द्वादश भेदाः भवन्ति अतस्ता इत्युक्तम् ।

Digitized by Google

अनवसिता१६न्यौ भ्गौ सुवरन्ते(१) ।

---

१२ । अथ जगत्याम् । ४०९६

चन्द्रवर्त्म१ निगदन्ति रनभसैः ।
जतौ तु वंशस्थ२मुदीरितं जरौ ॥
स्यादिन्द्रवंशा३ततजै रसंयुता ।
इह तोटक४मम्बुधिसैः प्रथितम् ॥
द्रुतविलम्बित५माह नभौ भरौ ।
वसुयुगविरतिर्नौ म्यौ पुटो६ऽयम् ॥
प्रमुदितवदना७भवेन्नौ च रौ(२) ।
नयसहितौ न्यौ कुसुमविचित्रा८ ॥
रसैर्जसजसा जलोद्धतगतिः ९ ।
भुजङ्गप्रयातं१०भवेद्यैश्चतुर्भिः ॥

---

(१) श्येनिका१७रजौ रलौ गुरुर्यदा ।
विद्युन्माला१८भवेत्तौ तमौ गः ।
सान्द्रपदं१९स्याद्भतनगलैश्च ।
शिखण्डितमिदं जसौ तगौ गुरुश्चेत् । परिशिष्टम् ।

(२) वसुयुगविरतिर्ननौ रौ प्रभेति मल्लिनाथसम्मतम् ।
नयुगरयुगयुग् गौरी मतेति कौमुदीकारमतम् ।

Digitized by Google

रैश्चतुर्भिर्युता स्रग्विणी११ सम्मता।
भुवि भवेन्नभजरैः प्रियंवदा१२ ॥
त्यौ त्यौ मणिमाला१३छिन्ना गुहवक्त्रैः।
धीरैरभाणि ललिता१४तभौ जरौ ॥
प्रमिताक्षरा१५सजससैरुदिता।
ननभरसहिता गदितोज्ज्वला१६ ॥
पञ्चाश्वैश्छिन्ना वैश्वदेवी१७ममौ यौ।
अभ्रर्ष्टाभिर्जलधरमाला१८म्भौ स्मौ ॥
इह नवमालिका१९नजभयैः स्यात्।
भवति नजावथ मालती२०जरौ ॥
अभिनवतामरसं२१नजजाद्यः(१)।

(१) पञ्चमुनि म्भौ सात् सयुता ललना२२।
ललित२३मभिहितं नौ म्नौ नामतः।
द्रुतपदं२४भवति नभयाश्चेत्।
सर्वे मा यस्मिन् सोऽयं विद्याधारः२५स्यात्।
लघुगुरुवदन्ति पञ्चचामरम्२६।
सारङ्गसंज्ञं२७समस्तैस्तकारैस्तु।
समस्तज मीरय मौक्तिकदाम २८।
मोटकनाम२९समस्तभमीरय।
रविलघु तरल३०नयनमिह। परिशिष्टम्।

Digitized by Google

१३। अथातिजगत्याम्। ८१९२

तुरगरसयतिर्नौ ततौ गः क्षमा१।

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्२॥

चतुर्ग्रहैरतिरुचिरा३जभस्जगाः।

वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्४॥

सजसाजगौ भवति मञ्जुभाषिणी५। (१)

---

१४। अथ शक्वर्य्याम्। १६३८४

म्तौ न्सौ गावक्षग्रहैर्विरतिरसंबाधा१।

---

(१) यमौ रौ विख्याता चञ्चरीकावली६गः।

न सरयुगगैश्चन्द्ररेखा७तुलोकैः

ऋतुमुनियति विद्युद्भ्रनौ तौ गुरुः।

इदं कन्दुकं९यत्र येभ्यश्चतुर्भ्यो गः।

भवति मृगेन्द्रमुखं१० नजौ जरौ गः।

नयुगसयुगगुरुभिः किल चण्डी११

उपस्थित१२मिदं ज्सौ त्सौ यदि गुरुः स्यात्

जसौ सजौ गौ भवति मञ्जुहासिनी१२

इह नन्दिनी१३सजससैर्गुरुयुक्तैः।

कुटजगति१४र्नजौ सन्ततं भ्नौ गुरुः। परिशिष्टम्।

Digitized by Google

ननरसलघुगैः स्वरैरपराजिता२ ॥
ननभनलघुगैः प्रहरणकलिका३ ।
उक्ता वसन्ततिलका४तभजा जगौ गः ॥
सिंहोन्नतेय५मुदिता मुनिकाश्यपेन ।
उद्धर्षिणीय६मुदिता मुनिसैतवेन ॥
इन्दुवदना७भजसनैः सगुरुयुग्मैः ।
द्विःसप्तच्छिदलोला८म्सौ म्भौ गौ चरणे चेत् ॥ (१)

---

(१) ननतजगुरुगैः सघयतिर्नदी९स्यात्
लक्ष्मी१०रन्तविरामा म्सौ तनौ गुरुयुग्मम्
त्रिननगगिति वसुयति सुपवित्रम् ११ ।
मध्यक्षामा१२युगदशविरमा म्भौ न्यौ गौ
युगदिग्भिः कुटिल१३मिति म्भौ न्यौ गौ
नजभजगा गुरुश्च भवति प्रमदा१४
मजसा यलौ गिति शरग्रहैर्मञ्जरी१५
नजभजगैर्गुरुश्च वसुषट् कुमारी१६
मरनरैर्लगौ च रचितं सुकेसरम् १७ ।
म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः१८
वासन्तीयं१९स्यादिह खलु मतौ न्यौ गौ चेत् ।
चक्रपद२०मिह भ न न न न गुरुभिः । परिशिष्टम् ।

Digitized by Google

१५। अथातिशक्वर्य्याम्। ३२७६८

द्विहतहयलघुरथ गिति शशिकला१।

स्रगिरति भवति रसनवकयतिरियम्॥

वसुहययतिरिह मणिगुणनिकरः२।

ननमयययुतेयं मालिनी४भोगिलोकैः।

भवति नजौ भजौ रसहितौ प्रभद्रकम्५।

सजनानयौ शरदश्वयतिरियमेला६।

मौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा७॥(१)

---

(१) माः पञ्च सूर्यस्यां सा कामक्रीडासंज्ञाऽन्यथा।

नजभजरैर्विराजितमिदं सुखेलकम्८। परिशिष्टम्।

चन्द्रकान्ताभिधा१०रौ म्सौ विरामः स्वराष्टौ।

ननत भरश्रुताश्वस्वरैरुपमालिनी११।

चित्रा१२नाम च्छन्दो यस्मिंस्त्रयो मास्ततो यौ।

ऋषभाख्य१३मेतदुदितं सजसाः सयौ चेत्॥

विपिनतिलकं१४नमनरेफयुग्मैर्भवेत्।

तूणकं१५भवेदिदं रजौ रजौ ततश्च रः।

कथयन्ति मानसहंसनाम१६सजौ जभराः।

सभसैः शिवनक्षमितैर्गदिता नलिनी१७

यंस निशिपालक१८मिदं भजसनाश्च रः॥ परिशिष्टम्

१६ । अथाष्टौ । ६५५३६

भत्रिनगैः(१)स्वरात्खमृषभगजविलसितम्१ ।
नजभजरैः सदा भवति वाणिनीरगयुक्तैः (२) ॥

---

(१) भश्च त्रयो नाश्च गश्च तैः । स्वरात् सप्तमाक्षरात् खं छिद्रं नवमाक्षरे छिन्नमिति शेषः ।

(२) चित्रसंज्ञ३मीरितं रजौ रजौ रगौ च वृत्तम् ।
जरौ जरौ ततो जगौ च पञ्चचामरं४वदेत् ।
संकथिता भरौ नरनगाश्च धीरललिता५ ।
पञ्चभकारयुता८स्वगतिर्यदि चान्त्यगुरुः ।
नजरभभैर्गेन च स्यान्मणिकल्पलता७ ।
यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद्रूपं८नाम ।
यमौ नः सो रो गः प्रवरललितं ९नाम बोध्यम् ।
गरुडरुतं१०नजौ भजतगा भवेयुर्यदा
वेदाङ्काङ्कै र्मदनललिता११मोभोनमसाः ।
भः समभनगा यस्यां सार्कच्छिदिह चकिता१२
भोरयना नगौ च यस्यां वरयुवति१३रियम् । परि॰



Digitized by Google

१७ । अथात्यष्टौ । १३१०७२

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी१ ।
जसौ जसयला वसुग्रहयतिश्च पृथ्वी२गुरुः ।
दिङ्मुनि वंशपत्रपतितं३भरनभनलगैः ।
रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी४तदा ।
मन्दाक्रान्ता५जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।
हयदशभिर्नजौ भजजला गुरु नर्द्द(कु)टकम्६ ।
मुनिगुहकार्णवैः कृतयति वद कोकिलकम्७ ।(१)

---

१८ । अथ धृतौ । २६२१४४

स्याद्भूतर्त्त्वश्वैः कुसुमित१लतावेल्लिता म्तौ न यौ यौ(२)

---

(१) रसयुगहययुङ् नौ म्रौ स्रौ लगौ हि यदा हरिः८ ।
भवेत् कान्ता९युगरसहयैर्यभौ नरसा लगौ ।
ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा१० ।
ससजैर्विभाविनी११मता भजसरैर्गुरुभ्याम् ।
वेदाङ्गाश्वैर्मभनमयला गश्चेत्तसौ हारिणी१२ ।
भाराक्रान्ता१३युगरसनगैर्मभौ नरसा लगौ ।
अवेहि पद्मकमरं१४जरौ जरौ जगौ लघुश्च । परि०
(२)मात् सौजौ भरसंयुतौ करिवाणखैर्हरिणप्लुतम् २।

यदि ह नयुगलं ततो वेदरेफैर्मन्दाममालिका ।३ ।
पञ्चभकारयुता स्रगति४र्यदि चान्त्यसरचिता ।
सुधा५तर्कैस्तर्कैर्भवति ऋतुभिर्यमो नसतसाः ।
वर्णास्त्वैर्मननततमकैः कीर्त्तिता चित्रलेखेयम् ६ ।
भाद् रनना नसौ भ्रमरपदकं७मिदमभिहितम्
शार्दूलं८वद मासषट्कयति मः सौ जसौ रौ मश्चेत्
अर्थास्वास्त्वैर्मभनयरयुगैर्वृत्तं मतं केसरम् ९ ।
म्भौ न्जौ भ्रौ चेच्चल१०मिदमुदितं युगैर्मुनिभिः स्वरैः ।
सैषा वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा ११ ।
चरधिकदशयति ननौ रौ भवेतां ररौ तारका१२
भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता १३ ।
तद्रूतत्वस्त्वैर्मौ भमौ विरतिश्चेत् सिंहविस्फूर्जितं१४यौ ।
सौ र जजौ भरसंयुतौ करिवाणखेद्दंरनत्तनम् १५
इदं क्रोडचक्रं१६सदीर्घं समस्तैर्यकारैः समेतम् ।
वेदाङ्कान्तैर्मभनययुगैः स्यादियं चन्द्रलेखा१७ ।
दशवसुभिरियं नयुग्मं प्रसिद्धा ततो रा ललना१८ ।
शिवतुरगैस्तु नन्दन१९मिदं नजौ भजौ रद्वयम् ।
अष्टदिग्भिरियं रसौ जयुगं भरौ विबुधप्रिया२० ।
सूर्याङ्कैर्मगणः सजौ सतमयुतौ शार्दूलललितम् २१ ।
हीरकर२मुदितं भसनजनैरिह रगणोऽन्ततः । परि०

१९ । अथातिधृतौ । ५२४२८८

सूर्य्याश्वैर्मसजस्तता सगुरवः शार्दूलविक्रीडितम्१ ।(१)

---

२० । अथ कृतौ । १०४८५७६

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना१ ।
त्रीरजौगलौ(२)भवेदिहेदृशेन लक्षणेन वृत्तनाम२ ।(३)

---

(१) नयुगलगलघू निरन्तरौ यदा स पञ्चचामरः २ ।
रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिताइस्यात्
भूताश्वाश्वान्तं मतनसररगैः कीर्त्तितं पुष्पदाम । ४ ।
वृत्तं बिम्बाख्यं५ शरमुनितुरगैर्म्तौ न्सौ ततो चेद्गुरुः ।
इयं छायाद्६ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरुः ।
रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ७ ।
इनाश्वैः स्याद् यभनयजजगाः कीर्त्तिता मणिमञ्जरी८
गजाब्धितुरगैर्जसौ जसतभागश्चेत् समुद्रतता९ । परि०
(२) त्रिः त्रिराहत्तौ रगौ रगजजगजौ अन्ते गलौ च ।
(३) रसैरश्वैरश्वैर्यममनततगैर्गेन शोभेयर१-मुक्ता ।
ख्याता पूर्बैः सुवंशाइ यदि मरभना सद्वयं गो गुरुश्च

२१ । ।अथ प्रकृतौ । २०९७१५२.

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा१कीर्तितेयम् ।(१)

---

२२ । आकृतौ । ४१९४३०४

मौ नरनारनावथ गुरुर्दिगर्कविरमं हि भद्रक१मिदम् ।(२)

---

२३ । विकृतौ । ८३८८६०८

यदि ह नजौ भजौ भजभलगास्तदाश्वललितं१हरार्कयतिमत् ।

---

सभरा न्मौ यलगास्त्रयोदशयतिर्मत्तेभविक्रीडितम्४ ।
सगणौ जयुग्मभरैः स्लगैः कथिता बुधैरिह गीतिका५ ।
सप्तर्ष्यङ्कैर्विरामो मरभनयभल गाः स्यात् सुवदना५। प्रि०
(१)सलिलनिधिर-भवेदिह नजौ भगणौ जगणास्त्रयश्च१रः ।प्र०
(२) सप्तभकाररुताववसितौ सगुरुः कविभिः कथिता मदिरा२
लालित्यं३ भुजगेन्द्रेण भाषितमेतच्चेन्मसरस्तजनगुभिः ।

Digitized by Google

मत्ताक्रीडा२ मौ त्नौ नौ नलूगिति भवति वसुशरदश-
यतियुता ।(१)

---

२४ । संकृती । १६७७७२१६

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि
भवति तन्वी१ ।(२)

---

२५ अतिकृती । ३३५५४४३२

क्रौञ्चपदा१ भ्मौ स्भौ ननना न्गाविषुशरवसुमुनि-
विरतिरिह भवेत् ।

---

सजता नसौ रसौ गः फणितुरगहयैः स्यान्महास्रग्धराख्या।
म्गौ गौ नास्रत्वारो गो गो भवति वसुभुवनयतिरिति हंसी ।

(१) इह कुन्दविकाश पिङ्गजमुनिनोक्ता वदयतो भवता
जलभ्रमाः । परिशिष्टम् ।

(२) नाम किरीट२-मिदं भवया यदि पिङ्गलनागमुनीष्टमतं
किल ।

मनयैरिह कलवरं वसुभिः किल दुर्मिल१-वृत्त-
मिदं कविभिः । परिशिष्टम् ।

२६ । उत्कृती । ६७१०८८६४

वस्रीग्रास्वच्छेदोपेतं ममननयुगनरसलगैर्भुजङ्ग-
विजृम्भितम्१ ।

मो नाः षट् सगमिति यदि नवरसरसग्ररयतियुत-
मपवाहाख्यम्२ ।

अथ दण्डके ।

यदि ह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टि-
प्रयातो१भवेद्दण्डकः ।

प्रतिचरणविवृद्धरेफाः स्युरर्णो२र्णव३व्याल४जी-
मूत५लीलाकरो६द्दाम७शङ्ख८दयः ।(१)

---

(१) तथा च रगणाष्टकेन रचितचरणः अर्णाख्यो दण्डकः२ । रगणनवकेन अर्णवाख्यः३ । तद्दशकेन व्यालाख्यः४ । एकादशरगणैः रचितः जीमूतः५ । द्वादशभिः रगणैः, लीलाकरः६ । त्रयोदशभिः रगणैः, उद्दामः७ । चतुर्दशभिः रगणैः, शङ्खः८ । आदिपदात् पञ्चदशादिभिः रगणैर्घटितपादाः क्रमेण आरामः९ संग्रामः१० सुरदाम वैकुण्ठ ११ सार१२ कासार१३ विसार१४ संहार१५ नीहार१६ मन्दार१७ केदार१८ आसार१९ सत्कार२०

प्रचितक२७समभिधो धीरधीभिः स्मृतो दण्डको
नद्वयादुत्तरैः सप्तभिर्यैः ।(१)

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रे वर्णवृत्तकथनं
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

संग्राम२१ माकन्द२२ गोविन्द२३ सानन्द२४ सन्दोह२५
आनन्द२६ इत्येते ग्राह्याः ।

(१) नयुगलगुरुयुगेवं यकाराः कवीच्छानुरोधात्तदा यत्र
वर्ध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहवि
क्रान्तनामा२८ ।

यत्र रेफान् कविः स्वेच्छया पाठसौकार्य्यसापेक्षया-
रोपयत्येव धीरैः, स्मृतो दण्डको मत्तमातङ्गलीलाकरः२९ ।

लघुगुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया स दण्डक-
स्त्वनङ्गशेखरः स्मृतः३० ।

स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः
स दण्डकः स्मृतो जयत्यशोकमञ्जरी३१ ।

सगणाः सकलः खलु यत्र भवेत् तमिह प्रवदन्ति बुधाः
कुसुमस्तवकम्३२ ।

यकारैः कवीच्छानुरोधात् निबद्धैः प्रसिद्धो विशुद्धो-
ऽपरोदण्डकः सिंहविक्रीड़नामा३३ । परिशिष्टम् ।

Digitized by Google

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम्१ ॥
भत्रयमोजगतं गुरुणी चेद्-
युजि च नजौ ज्यतौ द्रुतमध्या२ ॥
सयुगात् सगुरू विषमे चेद्-
भाविह वेगवती३युजि भाद्गौ ॥
ओजे तपरौ जरौ गुरुश्चेन्-
म्सौ ज्गौ ग् भद्रविराड्४भवेदनोजे ॥
असमे सजौ सगुरुयुक्तौ, केतुमती५समे भरनगाद्गः ।
आख्यानकी६ तौ जगुरू ग ओजे
जतावनोजे जगुरू गुरुश्चेत् ॥
जतौ जगौ गो विषमे, समे चेत्
तौ ज्गौ ग एषा विपरीतपूर्वा७ ॥
सयुगात् सलघू विषमे गुरु-
युजि नभौ भरकौ हरिणप्लुता८ ॥
अयुजि ननरला गुरुः समे
नजमपरवक्त्र९मिदं ततो जरौ ॥
अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा१० ॥
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।

Digitized by Google

पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥

स्याद्युग्मके रजौ रयौ समे चेत्

जरौ जरौ गुरुर्यवात् परा(१)मती११यम् । (२)

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रेऽर्द्धसम वर्णवृत्त-

कथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

मुखपादोऽष्टभिर्वर्णैः

परेऽस्मान्मकरालयैः क्रमाद्वृद्धा: ।

---

(१) यवात्परा मती यवमतीति नाम ।

(२) अयुजि ननभभा१समकेऽपि तु, नयुगरयुगलं तदा कौमुदी१२

यदि विषमे भवतो नजौ जरौ । सजयाः समे तु जगुरु मञ्जु-

सौरभम्१३ ।

विषमे ससजा यदा गुरू चेत्, सभरा येन तु मालभारि-

णीयम्१४ परिभिद्धम् ।

सततं यस्य विचित्रैः पादैः सम्यक्सौन्दर्य्यं
तदभिहितममलधीभिः पदचतुरूर्द्ध्वाभिधं[१] वृत्तम् ।(१)

प्रथममुदितवृत्ते,
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह सहित आद्या
लघुविरचितपदरचनयतिरिति भवति पीडः[२] । (२)

प्रथममपरचरणसमुत्थम्,
अयति स यदि लब्धम् ।
इतरदितरगदितमपि यदि च तुर्य्यं(३)
चरणयुगलकमविकृतमपरमिति कलिका[३]सा ।

---

(१) अस्मात् मुखपादात् मकराक्षयैश्चतुर्भिरक्षरैः क्रमा-
दृद्धाः यस्य परे पादाः तथाच द्वितीयः द्वादशाक्षरैः,
उपलक्षितः तृतीयः षोडशाक्षरैः चतुर्थः विंशत्यक्षरैः
तत् पदचतुरूर्द्ध्वाभिधं नाम ।

(२) आद्या सहितः पीडः आपीड इति वृत्तनाम ।

(३) प्रथमं तुर्य्यं चरणमपरे स्थानस्थिते द्वितीयचरणे समुत्थं
लब्धम्, इतरत् द्वितीयं चरणम् इतरस्मिन् स्थानस्थिते पूर्वं
प्रथमे यत् गदितमुक्तं लब्धं तत् अयति अपरं तद्भिन्नं
तृतीयं चतुर्थं च चरणमविकृतं तदा कलिकेति नाम ।

Digitized by Google

द्विगुरुयुतसकलचरणान्ता
सुखचरणगतमनुभवति च तृतीयम् ।
अपरमिह हि लघु
प्रकृतमखिलमपि यतिदमनुभवति खवली४ सा ।
प्रथमसमधिवसति यदि तुर्यम्(१)
चरमचरणलयमवसितिगुरुयुग्मम् ।
अखिलमपरमुपरिगतमिति ललितपदयुक्ता
तदियमम्टतधारा५ ।
इति पदचतुरूर्द्धप्रकरणम् ।
सजमादिमे सलघुकौ च
नसजगुरुकैरथोद्गता१ ।
त्र्यङ्गिगत भनजला गयुता:
स ज सा जगौ चरणमेकत: पठेत् ॥

---

(१) यदि प्रथमं तुर्य्यं चरणं चरमचरणलयमन्त्यचरणस्थानमधिवसति यदि अपरमखिलं द्वितीयादिचरणमुपरिगतम् आपीडगतं लक्षणमधिवसति चेत् अवसिति गुरुयुग्ममिति तल्लक्षणबोधाय स्पष्टार्थमुक्तम् तत् अम्टतधारा नाम ।

चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम् ।
नौ भगौ भवति सौरभकम् २
चरणे यदीह भवतस्तृतीयके ॥
नयुगलं सकारयुगलं च,
भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितं३
यदि शेषमस्य खलु पूर्वतुल्यकम् ।
इत्युद्गताप्रकरणम् ।

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्य-
त्रितयं सनजरगास्ततो ननौ सः । (१)
त्रिनपरिकलितजयौ
प्रचुपित१मिदमुदितमुपस्थितपूर्वम् ॥
नौ पादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्घ्रिकृतयतिस्तु वर्द्धमानम्२ ।

(१) त्रितयं चरणानामिति शेषः । ततस्तदनन्तरे द्वितीयपादे, सनजरगाः तृतीये ननौ सः । ततस्तदनन्तरे चतुर्थे नत्रयजयाश्च यदा स्युः तदा उपस्थिपूर्वं प्रचुपितं नाम वृत्तम् ।



Digitized by Google

त्रितयमपरमपि पूर्व्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम् ॥
अस्मिन्नेव तृतीयके यदा नजराः स्युः ।
प्रथमे च विरतिरार्षभं३ ब्रुवन्ति ॥
तच्छन्दुविराट्४पुरःस्थितं त्रितयमपरमपि यदि
पूर्वसमं स्यात् ॥

इत्युपस्थितप्रचुपितप्रकरणम् ।

विषमाक्षरपादं(१) वा पादैरसमं दशधर्म्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति२ तत् पूर्वसूरिभिः
प्रोक्तम् ॥

इति वृत्तरत्नाकराख्ये छन्दसि विषम वृत्तकथनं
नाम पञ्चमोऽध्यायः ।

---

(१) विषमाक्षरपादं यथा "मधुकैटभौ दुरात्मानौ" इति ।
"महिषेऽसुराणामधिपे" इति च चण्डी। पादैः चरणैः
असमम् अतुल्यम् षड्वाद्युपलक्षितम् दशधर्म्मवत् दशधर्म्म
प्रतिपादिका महाभारतस्य गाथा तया तुल्यं सा हि षड्भिः
चरणैरुपलक्षिता । यथा,

Digitized by Google

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ।(१)
पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् ॥

---

दश धर्म्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश । इति ।

(१)प्रस्तार्य्यन्ते विस्तार्य्यन्ते गुरुलघुरूपतया वर्णा मात्रा वा अनेन प्रस्तारः लघुगुरुवर्णादिज्ञानोपायक्रिया । "अत्रै-तावतिको भेदः किंरूप इति पृच्छति । यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते" इत्युक्तलक्षणम् एकादिवर्णादिप्रस्तारे इयत्संख्यको भेदः कीदृश इति पृष्टे तस्य लघुगुरुसन्नि-वेशविशेषसमर्थनरूपोत्तरं नष्टम् ! । ईदृशसन्निवेशविशे-षवान् भेदः कियत्संख्यक इति पृष्टे तत्समर्थनरूपो-त्तरम् उद्दिष्टम् । प्रस्तारे एकद्व्यादिलघुगुरुभेदवतां क्रिया तज्ज्ञानोपायः । संख्यानं प्रस्तारसंख्या । प्रस्तारलेख-नाय पर्य्याप्तः देशोऽध्वा तस्य योगः । एते षट्प्रत्ययाः प्रतीयते ज्ञायते संख्याविशेषः एभिः ते प्रत्ययाः संख्या-स्वरूपविशेषादिज्ञापकाः उपायभेदाः ।

Digitized by Google

ऊने दद्याद्गुरूनेव यावत् सर्व्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः । युग्मम्(१)

(१) प्रस्तारणीयवृत्तादीनां सर्वगुरुके पादे पाद इत्युपलक्षणं वर्णानामपि । प्रथमपङ्क्तौ लिखिते आद्यात् प्रथमगुरोस्तमारभ्येत्यर्थः । द्वितीयपङ्क्तौ अधः तस्यैव अधस्तात् पङ्क्तौ प्रथमं लघुं न्यस्य यथा उपरि ऊर्द्ध्वस्थपङ्क्तौ अपरे वर्णाश्रिष्ठाः सन्निविष्टास्तथा तस्य दक्षिणपार्श्वेषु गुर्वादयो लेख्याः । तृतीयपङ्क्तौ तु प्रथमाया गुरुव्यक्तेरधस्तात् लघुं न्यस्य शेषान् उपरिस्थद्वितीयपङ्क्तिस्थान् गुर्वादीन् न्यसेत् एवञ्च तृतीयपङ्क्तौ आद्यस्थानस्य न्यूनता तत्र किं देयमित्याकाङ्क्षायामाह, ऊने प्रस्तार्य्यसंख्यातो न्यूने सति वामभागे गुरून् दद्यात् एवं भूयो मुहुः कुर्य्यात् यावच्च सर्वलघुकः पादो भवेत्, तावदेवं कुर्य्यादित्यर्थः । अक्षरप्रस्तारे लघुगुर्वोः ऋजुवक्रतया तदाकारेणोदाहरणम् ।

| | | |
|---|---|---|
| प्रथमभेदः | ऽ ऽ ऽ | मगणः |
| द्वितीयो भेदः | । ऽ ऽ | यगणः |
| तृतीयो भेदः | ऽ । ऽ | रगणः |
| चतुर्थो भेदः | । । ऽ | सगणः |
| पञ्चमो भेदः | ऽ ऽ । | तगणः |

Digitized by Google

नष्टस्य यो भवेदङ्कस्तस्यार्द्धेऽर्द्धे समे च लः ।
विषमे चैकमाधाय तस्यार्द्धेऽर्द्धे गुरुर्भवेत् ॥ (१)
उद्दिष्टं द्विगुणानाद्यादुपर्य्यङ्कान् समालिखेत् ।

---

| | | |
|---|---|---|
| षष्ठो भेदः | । ऽ । | जगणः |
| सप्तमो भेदः | ऽ । । | भगणः |
| अष्टमो भेदः | । । । | नगणः |

मात्राप्रस्तारे विशेषस्तु पिङ्गलादौ द्रष्टव्यः ।

(१) नष्टस्य अज्ञातस्वरूपस्य योऽङ्कः प्रस्तारमध्यपाति संख्याज्ञापकः अङ्कः तस्य तत्संख्यायाः समत्वे लो लघुर्लेख्यः तस्य अर्द्धे कृते तस्य समत्वे च सति लो लघुर्लेख्यः । पुनस्तस्याप्यर्द्धे समे सति लघुः एवं यावदक्षरसंख्या तावत् लेख्यः । एवं नष्टस्य संख्यायाविषमत्वे गुरुः, तत्रैकमाधाय संयोज्य तस्यार्द्धे कृते सति तस्य विषमत्वे गुरुः समत्वे लघुः विषयत्वे एकयोजिते पुनरर्द्धे कृते विषमे सति गुरुः समे सति लघुः । यथा त्र्यक्षरप्रस्तारे चतुर्थो भेदःकीदृशः इतिप्रश्ने,तत्संख्यायाः समत्वात् प्रथमं लघुः तस्यार्द्धे कृते तस्य द्व्यङ्कत्वात् समत्वे न पुनर्लघुः शिष्टे द्व्यङ्केऽर्द्धीकृते सति तस्य विषमत्वात् गुरुः एवञ्च चतुर्थो भेदः प्रथमद्वितीयलघुकः अन्त्यगुरुक इत्युत्तरम् ।

Digitized by Google

लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् । (१)
वर्णान् वृत्तभवान् सैकानौत्तराधर्य्यतः स्थितान् ।
एकादिक्रमतश्चैतानुपर्य्युपरि निक्षिपेत् ॥
उपान्त्यतो निवर्त्तेत त्यजन्नेकैकमूर्द्धतः ।
उपर्य्याद्याद्गुरोरेवमेकद्व्यादिलगक्रिया । युग्मम्।(२)

---

(१) आद्यात् आद्यवर्णमारभ्य उपरि द्विगुणान् द्विगुणान् वीप्सार्थे द्विः अङ्कान् समालिखेत् तत्र लघुवर्णो परिस्थाङ्कैर्मिलितैः एकेन युक्तैः उद्दिष्टं स्यात्। यथा ४अक्षर-प्रस्तारे मध्यगुरुकः भेदः कियत्संख्यक इति प्रश्ने यथोत्तरं द्विगुणान् द्विगुणान् अक्षरसंख्यया अङ्कान् दद्यात् तत्र लघुवर्णोपरिस्थैरेकचतुरङ्कैर्मिलितैः पञ्चाङ्कैः एकेन युक्तैः षडङ्कः संपद्यते एवञ्च षष्ठोऽयं भेद इत्युत्तरम् ।

(२) एकादि लघुगुरुकव्यक्तिभेदसंख्याज्ञानोपायमाह वर्णानित्यादि,—

एकाक्षरादिप्रस्तारे उदाहरणम् ।

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | | | | |
| १ | २ | १ | | | |
| १ | ३ | ३ | १ | | |
| १ | ४ | ६ | ४ | १ | |
| १ | ५ | १० | १० | ५ | १ |

Digitized by Google

अत्र प्रथमाक्षरसंख्या एकाङ्कः तत्र योजनं न सम्भवति उपरिस्थाङ्काभावात्। द्वितीयपङ्क्तौ वृत्ताक्षरसंख्या द्वावेकाङ्कौ सैकौ उपरिस्थेन प्रथमैकाङ्केन युक्तः द्व्यङ्कः। द्व्यङ्कस्य पुनर्योजनं नास्ति उपान्त्यतो निवर्त्ततेत्युक्तेः। तृतीयपङ्क्तौ त्र्यक्षरवृत्तानुसारेण त्रयोऽङ्काः सैकाः स्थाप्याः तत्र उपरिस्थाभ्यामेकद्व्यङ्काभ्यां योगे त्र्यङ्कः पुनः द्व्यङ्कैकाभ्यां योगेन त्र्यङ्कः ततो न मेलनम्। एवं चतुरक्षरादौ ज्ञेयम्। एवञ्चात्र प्रथमाङ्केन सर्व्वलघुः सर्व्वगुरुर्वा एको भेदः। एवं द्वितीयस्थानस्थाङ्कसूचिताः एकलघुका एकगुरुका वा भेदाः। तृतीयस्थानस्थाङ्कसूचिताः द्विलघुकाः द्विगुरुका वा भेदाः अन्त्यस्थाङ्केन सर्व्व गुरुः सर्व्वलघुको वा एको भेदो ज्ञेयः।

एतदुपायान्तरं लीलावत्यामुक्तमत्र प्रदर्श्यते,
एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः॥
परः पूर्व्वेण संगुण्यस्तत्परस्तत्परेण च।
एकद्व्यादिभेदाः स्युरिदं साधारणं स्मृतम्"॥

अस्यार्थः

एकादयो यथाक्रममेकैकोत्तरा अङ्का व्यस्ताः स्थाप्याः ते च क्रमस्थितैस्तैरेवाङ्कैर्भाज्याः। किं कृत्वेत्याशङ्काया-

लगक्रियाङ्कसन्दोहे भवेत्संख्याविमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ।(१)

---

माह, परः परवर्त्ती अङ्कः पूर्बेण पूर्बलब्धाङ्केन संगुण्यः पूरयितव्य इत्यर्थः । तत्परः तदुत्तराङ्कः तत्परेण पूर्ब-लब्धात् परवर्त्तिना अङ्केन संगुण्य इत्येवं यावत्समाप्ति भाज्याः ।

उदाहरणानि ।

| | त्र्यक्षरे | | | चतुरक्षरे | | | |
|---|---|---|---|---|---|---|---|
| भाज्याः | ३ | २ | १ | ४ | ३ | २ | १ |
| भाजकाः | १ | २ | ३ | १ | २ | ३ | ४ |
| लब्धानि | ३ | ३ | १ | ४ | ६ | ४ | १ |
| | एकलघुः | द्विलघुः | त्रिलघुः | १लघुः | २लः | ३लः | ४लः |
| | एकगुरुः | द्विगुरुः | त्रिगुरुः | १गुरुः | २गः | ३गः | ४गः |

(१) क्रमप्राप्तप्रस्तारभेदसंख्यामाह,—लगक्रियेत्यादिः । सन्दोहः समाहारः प्रकारान्तरमाह, उद्दिष्टाङ्कानां समा-हारः सैकः एकेन सहितः इमां प्रस्तारव्यक्तिभेदसंख्यां जनयेत् बोधयेत् इदमुपलक्षणम् । लीलावत्युक्त एक-द्व्यादिलगव्यक्तिसमाहारः सैकोऽपि प्रस्तारभेदसंख्यां बोध-येदेवेति बोध्यम् ।

Digitized by Google

संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्त्तितः।
वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्य्यात्तथाङ्गुलिम्॥(१)
वंशेऽभूत् कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधी।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त
श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम्॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रस्तारादिकथनं
नाम षष्ठोऽध्यायः।

समाप्तश्चायं ग्रन्थः॥

---

(१)क्रमप्राप्तमध्वयोगमाह। द्विगुणा द्विरावृत्ता संख्या प्रस्तारसंख्या एकोना सती अध्वा प्रकीर्त्तितः तत्रोपपत्ति-माह। यतः वृत्तस्य वृत्तसंस्थानस्य आङ्गुलिकीं व्याप्तिं स्थानं मुक्तेति शेषः अङ्गुलिं अङ्गुलिमितं स्थानम् अधः कुर्य्यात्। यथा त्र्यक्षरे अष्टौ भेदसंख्या तल्लेखनस्थानानि अष्टौ भेदयोरन्तरालस्थानानि सप्त इति पञ्चदश स्थानानि पञ्चदशाङ्गुलिमितानि कार्य्याणि तत्र अष्टौ भेदस्थानानि सप्त तदन्तरालदेशस्थानानि इति विशेषः। द्विगुणा

प्रस्तारसंख्या एकेन ऊना पद्यसंख्या भवति इति तयोर्भेदमिति बोध्यम्।

इति श्रीतारानाथ तर्कवाचस्पतिभट्टाचार्य्यकृता
वृत्तरत्नाकरविवृतिः समाप्ता।

ओं तत्सत्।

---

छन्दोमञ्जरीशुद्धिपत्रम्।

| अशुद्धम्। | शुद्धम्। | पत्रे | पङ्क्तौ |
|---|---|---|---|
| परार्द्धमीरिता। | परार्द्धमपीरिता। | ५४ | १२ |
| मृगहारिणी। | हरिणहारिणी। | ५४ | १२ |

Digitized by Google

THE FOLLOWING IS THE LIST OF

PROFESSOR TARKAVACHASPATI'S

WORKS & PUBLICATIONS.

| No. | Title | | Rs. | As. |
|---|---|---|---|---|
| 1. | Asubodham Vyakaranam | ... | 3 | 4 |
| 2. | Dhaturupadarsha | ... ... | 2 | „ |
| 3. | Sabda stoma Mahanidhi | ... | 10 | „ |
| 4. | Sidhantakoumudi with Sarala | | 11 | „ |
| 5. | Sidhantavindusara | ... ... | „ | 8 |
| 6. | Tuladanadipadhati | ... ... | 4 | „ |
| 7. | Gaya Shradhadipadhati | ... | 5 | „ |
| 8. | Sabdartharatna | ... ... | „ | 12 |
| 9. | Vakyamanjari | ... ... | „ | 4 |
| 10. | Vrittaratnakara and Chandomanjari with notes | | „ | 10 |
| 11. | Venisanhara with Commentary | | 2 | „ |
| 12. | Mudrarakshasa | Ditto ... | 2 | „ |
| 13. | Ratnavali ... | Ditto ... | 1 | 8 |
| 14. | Malavikagnimitra | Ditto ... | 2 | „ |
| 15. | Dhananjayavijaya | Ditto ... | „ | 4 |
| 16. | Mahaviracharita | Ditto ... | 1 | 8 |
| 17. | Sankhyatatwakoumudi | Ditto | 2 | 8 |
| 18. | Veiyakarana Bhusanasara | ... | 2 | „ |
| 19. | Lilavati ... | ... ... | 1 | „ |
| 20. | Vijaganita ... | ... ... | 2 | „ |
| 21. | Sishupalabadha with Mallinatha | | 10 | „ |
| 22. | Kiratarjuniya ... | Ditto ... | 4 | „ |
| 23. | Kumarasambhava Uttarakhandam | | „ | 8 |

Apply to

Pundit Jibananda Vidyasagara, B. A.

The 10th April 1870. } Calcutta Sanskrit College.


Digitized by Google

